वरुण-याग- -गः अप ६७,२, ३.

†वरुण-राजन्[a]- -जभ्यः आपश्रौ १४,३२, ५; बौश्रौ ७, ४ : १४; २९,५ : १८; हिश्रौ १५,८,३१; -जानः शांश्रौ ४,२१,१०; बौश्रौ १०, ५२ : ४; माश्रौ ६, २, ४, १; वाश्रौ २,२,३,२; काग्र २४, १२.

वरुणराज्ञी- -ज्ञीः-ज्ञीभ्यः कौसू १३५,९†.

वरुण-संमि(त>)ता- -ताः माग्र २,१४,२६.

वरुण सामन्[b]- -म जैश्रौप १०; लाश्रौ ७,१,१; क्षुसू २,३ : १८; ३,१० : १६; १८; निसू ७, ५ : ३२.

वरुण-सूक्त- -क्तम् आग्निग्र २, ४, ६ : २०.

वरुण-स्तुति- -तिः अअ ६,५१.

†वरुणा[c] आश्रौ ५,२०, ६[d]; शांश्रौ ३, २०, ४[d]; ०वरुणा शांश्रौ १२,१०,४; ११,२२.

वरुणा(ण-अ)न्त->°न्त-व्रतान्त- -न्तौ ऋप्रा ४,९०.

वरुणा(ण-अ)र्यमन्- -मणौ शंध ११६ : ४३; -मभ्याम् वाग्र १७, ६.

वरुणा(ण-अ)र्यम-मित्र- -त्राणाम् बृदे ३,१०८; ६,५०; ८,८६.

वरुणे(ण-इ)न्द्र- -न्द्रयोः अप १, ४,६.

वारुणेन्द्र[c]- -न्द्रेण वाश्रौ ३,२, ४,५; ६.

वरुणे(ण-इ)न्द्रा(न्द्र-अ)ग्नि-सोम- -मानाम् बृदे ८,४१.

वरुणे(ण-ई)रण- -णम् अअ ४, १६.

वरुणो(ण-उ)क्ति- -क्तिः अअ ४, १६.

वरूक- पाउभो २,२,२९.

वरूट- पाउभो २,२,१०५.

वरूतृ-, वरूत्रि, त्री- √वृ (आच्छादने) द्र.

१?वरूथ- -थान् निसू ६,१२ : १२.

२वरूथ[f]- -थाय बौग्र ३,९,५.

३वरूथ-, °थिन्-, °थ्य- √वृ (आच्छादने) द्र.

वरेणीय- √वृ (वरणे) द्र.

१वरेण्य[f]-(>वारेण्यायनि- पा.) पाग ४,१,१५४.

२वरेण्य-,√वरेय प्रभृ. √वृ(वरणे) द्र.

वर्कर- बर्कर- द्र.

वर्ग- प्रभृ. √वृज् द्र.

√वर्च् पाधा. भ्वा. आत्म. दीप्तौ.

वर्चस्[g]- पाउव्र ४, १८९; पाग ३, १,१२; -†र्चः आश्रौ ४,१२,२;५, १९,५;६,६,१६; शांश्रौ २,११,३; ४,१२,१०; काश्रौ; बौश्रौ १२,८ : २१[h]; २३[h]××; आग्निग्र १,५,१ : ४[i]; २,१,४ : १८; निघ २,७†[j]; -र्चसः अअ १९, ५८†; -र्चसा आश्रौ ११, ६, ४; †शांश्रौ २, ११,५[k]; ४,११, ६; ७,५, १[२]; ३[२]; ६; काश्रौ; आपश्रौ ६, १६, १२†[k]; बौश्रौ ३, ८ : १३†[k]××; माश्रौ ६, २, ३†[k]; वैश्रौ १८, १५ : १५†[k]××; हिश्रौ ६, ६, १५†[k]××; -†र्चसे काश्रौ ५, २,१४; आपश्रौ १, २०,११; ४, ११,२[२]; ५, ११,५; १३,४; ६, १४, ७[l]××; बौश्रौ ६, २ : १[m]××; आग्र १, १७,७[n]; कौग्र १, २१,८[m]; शांग्र १, २७,७[m]; २८,९[m]; पाग्र २, १, ९[m]; २, ७[m]; आग्निग्र २, २, ५ : ९[m]; काग्र ४०, १०[m]; बौग्र १, ८, ८[m]; २, ४, ९[m]××; भाग्र १, २८ : १२[m]; १७[m]××; हिग्र १, १०, ६[o]××; जैग्र १, ११ : ११[m]××.

वर्चस्-क[p]- पाग २, ४, ३१; -के पा ६,१,१४८.

वर्चस्-काम- -मः अअ ६, ३९; ६९.

√वर्चस्य पा ३,१,१२.

वर्चस्य[q]- -स्यः अप ३२, १, १०; ३३,६,१; -†स्यम् बौश्रौ १७, ४१ : १३; २५; ४२ : ७; आपमं २, ८, १; कौग्र; -स्यानि कौसू १२, १०; अप ३२,१,१०; -स्यैः अप ४६, २, १.

वर्चस्य-गण- -णः अप ३२, १,२८; -णस्य अअभू २.

वर्चस्-वत्- -वत् आपमं २, ८,

---

*a*) बस. । *b*) = साम-विशेष- । *c*) वैप १, ८२६ i द्र. । *d*) = सपा. मा ८, ५९ प्रमृ. माश ४, ५,७,७ तैब्रा २,८,४,५ षब्रा १, ५,१२। शौ ७, २६,१ तु वरुणम् इति पाभे. । *e*) सास्यदेवतीयः प्र. । *f*) व्यप. । *g*) वैप १ द्र. । *h*) पाभे. वैप १, ११८५ i द्र. । *i*) पाभे. वैप १,६८७ i द्र. । *j*) = अन्न- । *k*) पाभे. वैप १, १३९६ d द्र. । *l*) सपा. पाग्र २, ६, ११ श्रियै इति पाभे. । *m*) सपा. शौ ६, ६८,२ चक्षसे इति पाभे. । *n*) पाभे. वैप १ वर्चसा शौ ६, ६८,२ टि. द्र. । *o*) सप्र. खि ४, ६,१ आपमं २.८,१ वर्चस्वत् इति पाभे. । *p*) = मलमल- । कुत्सायां कन् प्र. । *q*) विप., नाप. ( मन्त्रगण-विशेष- ) ।

१†[a]; -वन्तः जैश्रौ ८ : ३?[b]; -†वन्तम् आश्रौ ६, ३, २२[c]; आपश्रौ १४, ३, ५; बौश्रौ १४, ११ : ७;१४[c]×; हिश्रौ; -†वान् बौश्रौ १०,३३ : २०; माश्रौ १, ४,१,२७; वाश्रौ.

वर्चस-विन्[d]- -†०विन्[e] शांश्रौ १०, २, ६; काश्रौ १२, ३, ६; -†वी शांश्रौ १०, २, ६[2f]; बौश्रौ ७, १३ : २६; भाश्रौ १०, २, २; आगृ १, २१, ४; कौगृ ३, १२,१८; भागृ.

वर्चस्वि-तम- -मः कौगृ ३, ६,६; शांगृ ३,११,११.

†वर्चः-सद्[d]- -सत् आपश्रौ १६, २९,२; वैश्रौ १८, २० : २८?[g]; हिश्रौ ११,८,४.

√वर्चाय पा ३,१,१२.

†वर्चो-दस्, दा[d]- -दसौ माश्रौ २,३,७,१[2h]; -दाः आश्रौ ५, १९,५[i]; शांश्रौ २, ११, ३[j]; ४, १२, १०[k]; काश्रौ ३, ८, १६[k], आपश्रौ; बौश्रौ ३,८ : ६[j]; १४, ८:१९[h]; पागृ २, ४,८[k]; अप्राय ६, ३[l]; -दौ आपश्रौ १२, १८, २०; वैश्रौ १५, २२ : ९.

†वर्चोधस्,धा[d]- -धाः आपश्रौ १०,६,१२; १४, २७,६[l]; बौश्रौ ३, २१ : ७; ६, २ : १३; २१, ८ : ८; भाश्रौ; वैश्रौ २१, १४ : ९[l]; -धाम् बौश्रौ ६,७ : ८[m].

वर्चगर्त[n]- (>वार्चगर्तक-)

वर्चल- (वार्चलीय- पा.) पाग ४, २, ८०.

वर्चस्- प्रभृ. √वर्च् द्र.

वर्जन- प्रभृ. √वृज् द्र.

√वर्ण् पाधा.चुरा.पर.प्रेरणे[o],उभ.वर्ण-क्रियाविस्तारगुणवचनेषु, वर्णयति चव्यू ४ : २५.

वर्णयिष्यामि शैशि १३३; याशि १,१; वर्णयिष्यामः वाध १४,१.

वर्ण(वप्रा.)[d,p]-पाउ ३,१०; पाग२,४, ३१; ४, २, ८०[q]; ५, २, ९५; १००; ४,३[r]; -र्णः †बौश्रौ ६, १५ : ४;१४,१५:१६; वाधूश्रौ; द्राश्रौ ११,३,६; निसू ७, ६ : ६; अप ४७,१,२××; आपध २, ११,१०; ११; हिध २, ४, २५; गौध १०,४९; १४,२८; या २, ३$\phi$; १४; २०; ११, ३९; शुप्रा ८,४५; तैप्रा १,१५; माशि १३, १; याशि १, १८; शैशि २६२; नाशि १, ८, ३; पा ६, २, ३; -र्णम् †शांश्रौ ७, १०, १५; ८, २५, १[2]; आपश्रौ २, ४, ८†; बौश्रौ; -र्णयोः भाश्रौ ४,४, १; २२,७; ५,१४, ४; जैगृ १,११ : २०; अप१; -र्णस्य भाश्रौ ५, २, ८; अप ५३, ४, ४; शंध ३९५; बृदे २,११६; या ७, ३१; शुप्रा; -र्णाः आश्रौ १०,५,१६; बौश्रौ २,११ : १; अप ४७,१,७; १२; ३, ६; ६१, १, ३; ६३, १, ४; वाध; -र्णात् शुप्रा १,३५; शौच १,९२; पाग ५,२, १२७; पावा ३, ३, १०८; पाप्रवा ५, १३; -र्णान् आपश्रौ १६, ३३, ८; २२, २०, १३; बौश्रौ १७, ४५ : ६; १८,८ : ३; १६; वैश्रौ; -र्णानाम् शांश्रौ १,१,२; आपश्रौ ५,३,१९; २४,१,१; बौश्रौ २६, ३३ : ७†; हिश्रौ १०, २, ३६; अप; -र्णाभ्याम् अप ४७,१, ५; -र्णे आपध १, १, ८; हिध १, १, ८; शुप्रा २, ३५; याशि २, ४२; पा ५,४, ३१; मीसू ९,२, ३३; -र्णेन बौश्रौ ६,३ : १२†; माश्रौ २,२,४, १९†; अप ५३, ४, ४; ५८[2], ३, ९; चव्यू ४ : १३;१८; २०; पावा २,१, ६९; -र्णेभ्यः गौध ४, १८; -र्णेषु बौश्रौ १८,२ : १४; वैगृ २,८ : १३; अप ६१,१, ४; शंध ३८२; बौध १,२,१८; विध १८,१; पा

*a*) पाभे. पृ २१५१ O द्र.। *b*) पाठः ? यनि. एत्र साधु (तु. सस्थ. टि. तत् इति)। सस्थ. ?अयाः> *असु-धाः (त्रिप.) इति, ?सुधाम्> *असु-धाम् (भाप.) इति च शोधात्रपि द्र.। सस्थ. ?मे >मयि इत्यपरः शोधोऽपि द्र.। 'हे अग्ने त्वमसुधा असि। अतः असुधां मयि धेहि। तद् (तथा हि) वयमायुष्मन्तो वर्चस्वन्तश्च ⌊सन्तः⌋ उद्गेष्म' इति वा.। *c*) पाभे. वैप १ वर्चस्वन्तम् तै ३,३,१,१[2] टि. द्र.। *d*) वैप १ द्र.। *e*) पाभे. वैप १ वर्चस्वन् का ८, १२, १ टि. द्र.। *f*) पाभे. वैप १ वर्चस्वान् मा ८, ३८ टि. द्र.। *g*) वर्चस° इति पाठः? यनि. शोधः (तु. आपश्रौ.)। *h*) एकतरत्र पाभे. वर्चोदसौ मा ७,२७ टि. द्र., अपरत्र वर्चोदाः मा ७,२७[6] टि. द्र.। *i*) पाभे. वैप १ वर्चोधाः मै ४,७,२ टि. द्र.। *j*) पाभे. वैप १ वर्चोदाः मा ३,१७ टि. द्र.। *k*) पाभे. वैप १ वर्चोदाः मा २,२६ टि. द्र.। *l*) सपा.°दाः <> °धाः (मै ४,६,६ च) इति पाभे.। *m*) =सपा. मा ४, ११। का ४, ५,२ तु वर्चोदाम् इति पाभे.। *n*) पृ ९८० g द्र.। *o*) वर्णने इत्येके। *p*) =⌊अकारादि-⌋ अक्षर-, ब्राह्मणादि-, शुक्लादि- प्रभृ.। *q*) अर्थः ?। =वीरण- इति पागम.। *r*) तु. पागम.।

६,२, ३; –र्णैः अप ६४, २,८;
आपध २, ११, ८; विध ७,१२;
–र्णौ द्राश्रौ ११, ३, १६; लाश्रौ
४, ३, १७; निसू ९, ८ : ११;
माशि ७,६.
वर्ण° पा ५,१,१२३.
१वर्ण-क[a]– पाग ४, ४,४८[b]; ५,२,
३६; –कस्य शांगृ ४, १५, ८;
–कैः अप १९[२],२,१;४.
वार्णिका[a]– पा ५, ४, ३[c].
१वार्णक– पा ४, ४,४८.
वर्णक-पे(षक>)षिका–
(>वार्णकपैषिक– पा.) पाग
४,४,४८[d,e].
वर्णक-म(य>)यी– -यीः अशां
५,८.
वर्णकित– पा ५,२,३६.
वर्ण-कल्प– -ल्पाः क्षुसू २,१ : १
वर्ण-कार– -रौ तैप्रा २२,४.
वर्ण-काल– -लः शैशि ३९; –लात्
शैशि १४३.
वर्ण-काल-भूयस्त्व– -स्त्वम् पावा
१,४,१०९.
वर्ण-क्रम– -मेण शंध २७५; आज्यो
१२,२.
वर्णक्रम-विचक्षण– -णः तैप्रा
२४,६.
वर्ण-गन्ध-रस-दु(ष्ट>)ष्टा–
-ष्टाभिः वाध ३,३६.
वर्ण-गुण– -णाः ऋप्रा १४,१.
वर्ण-गोत्रा(त्र–आ)दिक– -कम् बृदे
३,१४५.
वर्ण-गोत्रा(त्र–अ)विरोध —तस् (:)
बृदे ३,१४४.
वर्ण-ग्रहण– -णम् पावा १,१, ७२;
२,१,६९[२]; ६, ४, ४९; ७, ३,
४४; ५०; –णे पावा ६, १,१३;
–णेन पाप्रवा ४,६; –णेषु पावा
३,४,७७.
°वर्ण-ग्रहण–वर्जम् पावा १, १,७२;
वर्ण-जात– -तम् शैशि १७.
वर्ण-ज्ञान– -नम् पाप्रवा ८,१.
वर्ण-ज्यायस्– -यसाम् आपध १,१३,
२; २, ११, ८; हिध १,४,१६.
वर्ण-ज्यैष्ठ्य– -ष्ठ्येन कप्र १,८, ६.
वर्ण-तस्(:) बौश्रौ २८, ७ : १; अप
५८,१,८; ऋप्रा १७, १३; १८;
भाशि ११४; नाशि १, १, ५†.
वर्ण-त्व– -त्वम् आशि १,१.
वर्ण-देवता– -ताः शुप्रा ८,३६.
वर्ण-दोष–विवेका(क—अ)र्थ–-र्थम्
शुप्रा १,२६.
वर्ण-धर्म– -र्मः बौध ३, १०, १;
गौध १९,१; –र्माः शैशि ३४४.
वर्णधर्म-रञ्जन– -नेन सुधप ८८:
१०.
वर्ण-नामन्– -म या २, २०; ६,
१३; ९,२६.
वर्ण-परिग्रह– -हः अप ६३,४, ६.
वर्ण-परिध्वंस– -साः हिध २, १,
२९[f].
वर्ण-परिध्वंसा[g]– -सायाम् आपध
२,२,७; हिध २,१,२९.
वर्ण-पाठ– -ठे पावा १,१,६९.
वर्ण-पृक्त– -क्तः तैप्रा २३,३.
वर्ण-प्रकृति– -तयः तैप्रा २,७.
वर्ण-रूप–तस्(:) शैशि २१८.
वर्ण-रूप-विकार– -रान् अप ५९,
१,१.
वर्ण-लक्षण– -णात् पा ६,२, ११२.
वर्ण-लिङ्ग-स्वर-विभक्ति-वाक्य–
व्यत्यय– -यः अप्रा ३,४,६.
वर्ण-लोप– -पः या २, १; –पात्
अप्रा ३,३, २१; पावा ६, १,
६५.
वर्ण-लोपा(प-आ)गम-ह्रस्व-दीर्घ-
प्लुता(त-आ)त्मनेभाषा-परस्मै-
भाषा– -षाः अप्रा ३,४,७.
वर्ण-वत्– पा ५,२,९५.
वर्णवती– -०ति मागृ २, १४,
३०†.
वर्ण-विकार– -रः लाश्रौ ७, ११,
१९; –रात् पावा ६,१,१०६.
वर्ण-विचाल– -लस्य पावा १, १,
३९.
वर्ण-विद्[h]– -विदः पाशि २१०.
वर्ण-विधा– -धा[i] चव्यू ४ : १२.
वर्ण-विधि– -धिः पावा १,१, ४५;
–धेः पावा १,४,२; ३,४,७७.
वर्ण-विशेषो(ष–उ)त्पत्ति– -त्तिः
तैप्रा २३,१.
वर्ण-वेदिन्[h]– -दिनः आशि ८,२६.
–दिभिः शैशि १०३.
वर्ण-वैकृत्य– -त्यम् अप ६४,९,५.
वर्ण-वैशेष्य– -ष्यम् तैप्रा २३,२.
वर्ण-व्यतिक्रा(न्त>)न्ता–
–न्तायाम् आपध १, ९, १२;
हिध १,३,१२.
वर्ण-व्यत्यय– -ये पाप्रवा ५,१०.
वर्ण–व्यत्यया(य-अ)पायो(य-उ)
पजन-विकार– -रेषु पाप्रवा ५,
१५.
वर्ण-शिक्षा– -क्षाम् ऋप्रा १४,६८.
वर्ण-श्रुति– -तिः आशि ८,१.
वर्ण-स– पा ४,२,८०.

---

a) =रङ्ग-, चन्दनादि-लेप-। b) तु. पागम. । e टि. द्र. । अर्थः? । c) =(परीक्षार्थम्) सुवर्णादि-मात्रा- इति (पक्षे) पागम. । d) तु. पागम.। e) वर्णक–,पेषिका– इत्यन्यः(तु. पागम.)। f) सप्र. आपध २,२,७ परिध्वंसाः इति पाभे. । g) उप. भाप. <परि√ध्वंस । h) उप.<√विद् [ज्ञाने]। i) तृ१ द्र.।

वर्ण-संयोग- -गात् बौश्रौ २४, १ : १२; मीसू ११,४,११.
वर्ण-संवर्ग[a]- -र्गौ वाध ३,२४.
वर्ण-संहिता- -ता ऋप्रा ११, १४; तैप्रा २४,२.
वर्ण-संकर- -रात् बौध १,९, १५.
वर्णसंकर-कारि(न्>)णी- -णी आज्यो १३,८.
वर्णसंकर-रक्षणा(ण-अ)र्थ- -र्थम् विध ३,४६[b].
वर्ण-संख्या- -ख्ये शुप्रा ५,१५.
वर्ण-संघात- -तः शैशि ३५४.
वर्णसंघात-ज- -जम् बृदे २, ११७.
वर्ण-संचय- -यः अप ४७,१,३.
वर्ण-संज्ञा- -ज्ञा पावा १,१,४५.
वर्ण-समाकुल- -ले अप ७२,५,३.
वर्ण-समाम्नाय- -यः तैप्रा १, १; -यम् शुप्रा ८,१.
वर्ण-संपद्- -पदम् माशि १,२.
वर्ण-सांख्य- -ख्यम् माशि १३०.
वर्ण-सामान्य- -न्यात् या २, १; मीसू ८,१,४१.
वर्ण-स्नेहो(ह-उ)पपन्न- -न्नाः अप ५९, १,१७.
वर्ण-स्वार- -रः नाशि १,८,३.
वर्णा(र्ण-आ)ख्या- -ख्या तैप्रा १, १५.
वर्णा(र्ण-आ)त्म-गुण--शास्त्र- -त्रम् ऋप्रा १३,२१.
वर्णा(र्ण-अ)नुक्रम- -मेण विध ६, २; १८,७; २४,१.
वर्णानुक्रम-तस्(:) विध ८,३७.
वर्णा(र्ण-अ)नुपलब्धि- -ब्धौ पाप्रवा ५,११.

वर्णा(र्ण-अ)नुपूर्व- -र्वेण काश्रौ २३, ४,५; आपगृ१०,४;वाध १,२४.
वर्णा(र्ण-आ)नुपूर्व्य- -र्व्येण पागृ १, ४,८; बौध १, २, ११; ८, २; गौध २,४३.
वर्णा(र्ण-अ)न्तर- -रम् ऋत २,४, ४; मीसू १,१,१६[c]; -रे आपध २,१३, ३; हिध २,३,३.
वर्णान्तर-गमन- -नम् गौध ४, २२.
वर्णा(र्ण-अ)न्यत्व- -त्वम् तैप्रा २२, २.
वर्णा(र्ण-आ)पत्ति- -त्तीनाम् शुप्रा ४,१४९.
वर्णा(र्ण-अ)विशेष- -षेण आपश्रौ २४,२,३५.
वर्णा(र्ण-आ)श्रम- -माणाम् विध ३,३.
वर्णाश्रम-धर्म- -र्मम् वैध १, १७,१.
वर्णाश्रमा(म-आ)चार-रत- -ताः विध १,४७.
वर्णा(र्ण-आ)श्रय- -यः पावा १, १, ३९; -ये पावा २,१,१.
वर्णाश्रय-त्व- -त्वात् पावा ८,३, ६५.
वर्णाश्रय-विधि- -धौ पावा ६, १,८५.
वर्णा(र्ण-अ)श्रुत-त्रपुस[d]- -पुषा अप ३,१,१३.
वर्णिन्- पा ५, २,१३४; -र्णिनाम् विध ८,१५.
वर्णिल- पाग ५,२,१००.
वर्णी√भू >वर्णी-भवत्- -वन् ऋप्रा १३,१३.

वर्णै(र्ण-ए)कदेश- -शाः पाप्रवा ४, ६.
वर्णो(र्ण-उ)त्तर- -रः तैप्रा १,२०.
वर्णो(र्ण-उ)पजन- -नः या २,२.
१वर्णक- प्रभृ. वर्ण- द्र.
२वर्णक[e]- पाग २, ४, ६९[f]; ४, १, १०५[g]; २,१११[g].
वार्णक्य- पा ४,१,१०५.
२वार्णक- पा ४,२,१११.
वर्णका[h]- पावा ७,३,४५.
वर्ण-कार- प्रभृ. वर्ण- द्र.
वर्णसि- पाउ ४,१०७.
?वर्णाम् जैश्रौका ८८.
वर्णि- पाउ ४,१२४.
वर्णु[i]- पाउ ३,३८; पाग ४, २, ७७; १३३; १३४; ३, ९३; -र्णौ पा ४,२,१०३.
वार्णव- पा ४,२,७७;१३३; ३,९३.
वार्णवक- पा ४,२,१३४.
वर्त- √वृत् द्र.
वर्तक,का[j]- पाउभो २, २,७; -कम् शंध २२३;-का पावा ७,३,४५.
वर्तिका[i]- पाउ ३,१४६; -का अप १,३२, ३; या ५, २१†; -काः आपश्रौ २०, १४,५†; -†काम् आपश्रौ १५, ८, १२; बौश्रौ.
वर्तन- √वृत् द्र.
वर्तनाक्ष[e]-(>वार्तनाक्ष- पा.) पाग ४,१,११२.
वर्तनि,नी- प्रभृ. √वृत् द्र.
वर्तव्य- √वृ (वरणे) द्र.
वर्तस्[g]- -र्तोभ्याम् वाश्रौ ३, ४, ५, ११†.
१वर्ति- √वृ (आच्छादने) द्र.
२वर्ति-, वर्तितव्य- प्रभृ. √वृत् द्र.

*a*) उप. = सांकर्य-। *b*) °र्थे इति जीसं.। *c*) शब्दान्तरम् इति कासं.। *d*) तृस. > कस.। अश्रुत- = अश्रुतपूर्व-। *e*) व्यप.। *f*) पणक- इति पागम.। *g*) पृ १०४४ y द्र.। *h*) = प्रावार-विशेष-। *i*) = नदी-विशेष-, (उपचारात्) तद्दूरभवदेश-विशेष-। *j*) वैप १ द्र.।

वर्त्र-, वर्त्री- √वृ (आच्छादने) द्र.
वर्त्स[a]->वत्स्यं- -त्स्यंम् ऋप्रा १, ४६‡.
√वर्ध् पाधा. चुरा. पर. छेदन-पूरणयोः.
वर्धकि- पाउभो २,१,१७४.
वर्धन- √वृध् द्र.
?वर्धन्ताग्दितंपुनर्यन्धपूर्वमर्थः शैशि ९४.
वर्धमान- प्रभृ. √वृध् द्र.
वर्ध्र,ध्री[b]- पाउ २,२७.
वार्ध्र[c]->वार्ध्री- -र्ध्री आपश्रौ १८,१०,२३‡[d].
°वर्ध्र-बिल्व- -ल्वात् पा ४,३,१५१.
वर्ध्रा-बन्ध-कण्ठ[e]- -ण्ठः वैध ३, १४,७[f].
वर्पस्[b]- पाउ ४, २०१; -‡र्पः अप ४८, ७९; निघ ३, ७; या ५, ८ϕ; -‡र्पांसि आश्रौ ६,४,१०; शांश्रौ ९,१२,४.
वर्फस्- पाउवृ ४,२०१.
वर्मक- १वर्पुक- टि. द्र.
वर्मती- पाग ४,२,९५[g].
वार्मतेय- पा ४,३,९४.
वार्मतेयक- पा ४,२,९५.
वर्मन्-, √वर्मि, °र्मिक-, °र्मित- √वृ (आच्छादने) द्र.
१वर्मिन्- पाग ४, १,१५८[h]; -र्मी बौध १,५,१३४[i,j]; -‡र्मिणे[h] आग्निगृ १,२,२:१८; बौगृ ३, ९,५; भागृ ३,१०:५; हिगृ २, १९,६.
वार्म[k]-, वार्मिकायणि-, वार्मिण- पा ४,१,१५८.
२वर्मिन्- √वृ(आच्छादने) द्र.
वर्वर-(>वार्वरक-,°रीय-) बर्बर-द्र.
वर्वरीक- पाउ ४,१९.
वर्वि- पाउ ४,५३.
वर्वृतान- √वृत् द्र.
√वर्ष्[l] पाधा. भ्वा.आत्म.स्नेहने.
१वर्ष[b,m]- पाउ ३,६२; पाग २,४,३१; पावा ३.३,५६; -र्षम् विध २०, ५; ५१,१; -र्षस्य कागृ ४०, १; मागृ १,२१,१; पा ७,३, १६; -र्षाणाम् बौध १, २, ८; गौध १,९; -र्षाणि आश्रौ १२,५,१७; १८; शांश्रौ ३, ८,३; काश्रौ; -र्षात् शांगृ २,१,६; पागृ २,५,३६; वागृ ५, ३; वैगृ; -र्षे हिश्रौ १७, ७, २८; कौगृ १, २१, २; १७; शांगृ १, २८, २; २०; वैगृ; -र्षेऽ-र्षे वैगृ २, ९ : ११; विध ५१, ७६; -र्षेभ्यः बौश्रौ २४, ३२ : २०; वाध १७, ६८; ७६; -र्षेपु कौगृ २,१,१; अप ५३, ६, ७; -र्षैः आगृ १,१७,१;१८,२;१९, १; आपध १, २५, ११; २७, ११; बौध २,१,४१;४२; विध.
१वार्षिक[n]- -कम् वैगृ २,९:१०; शंध ४३९; -के वैगृ ३, २१ : ४.
वर्ष-त्रय- -यम् कप्र १,६,७.
वर्ष-पूग- -गान् विध ४३,३१[o].
१वर्ष-प्रमाण[p]- -णम् सुध २०.
वर्ष-वर्धन[q]- -नम् वैगृ ३, २० : १; २१ : १६.
वर्ष-शत- -तम् अप १८[2], १, १; विध २०, १५; गौध २१, २०; -तानि आश्रौ १२,५,१९; विध २०,६.
वार्षशतिक[r]- -कम् कौसू १०, १९.
वर्ष-सहस्र- -स्रम् भागृ २, ३१ : २; चाश्र ३९ : १९; -स्राणि अप १,५०,४; ५[2]; ४१, ३, ४; शंध ३७५; ४४०; विध १९, १२; २०, १०; -स्राय बृदे ६, २०.
वर्षसाहस्रिक[s]- -के वाध १४, १५.
वार्षसहस्रिक[s]- -के बृदे६,२२.
वर्षा(र्ष-आ)दि- -दौ अप ६५,३,६.
वर्षा(र्ष-अ)न्त- -न्ते वैगृ ३,२१:६.
वर्षा(र्ष-अ)भ्यन्तर- -रे अप ७१, ७,३.
२-३वर्ष-,१-२वर्ष-कर्मन्- प्रभृ. √वृष् (बधा.) द्र.
?वर्षकारी[t]- -रीम् आपगृ ३,१२.
वर्ष-ज-, वर्षण-, °र्षत्- प्रभृ. √वृष् (बधा.) द्र.
वर्षपुष्प[h]- -ष्पः बौश्रौप्र ६ : १.
वर्ष-प्रतिबन्ध-, २वर्ष-प्रमाण- √वृष् (बधा.) द्र.

---

*a*) = बःस्वँ- (तु. वैप १)। *b*) वैप १ द्र.। *c*) तु. पा ५, १, १५। *d*) पाभे. वैप १ वध्रिः काठ १५, ८ टि. द्र. (तु. हिश्रौ १३, ४, १० इत्यत्र भाष्यम्, पाका. [४,३,१५१] च; वैतु. शब्दसूची C. च उत्तरेण समस्तमिति)। *e*) पस.>बस.। *f*) °बद्ध° इति मूको.। *g*) पृ १०६८ l द्र.। *h*) व्यप.। *i*) = मत्स्य-विशेष-। *j*) पृ १८१४ d द्र.। *k*) तु. पागम.। *l*) √पर्ष्, √स्पर्ष् इति [पक्षे] BPG.। *m*) = संवत्सर-। *n*) भवार्थे ठञ् प्र.। *o*) °र्षयु° इति जीसं.। *p*) बस.। *q*) = संस्कार-विशेष-। *r*) तदस्यप्रयोजन-मित्यर्थे ठञ् प्र. (पा ५, १, १०९)। *s*) तेननिर्वृत्तमित्यर्थे ठञि प्र. पूप. वृद्धिर्वा। *t*) अर्थः ?। वराद् वर्षाधिका-वा स्वेदनशीला- वा कन्या- इति भाष्यम्।

**?वर्षबर्हिः**[a] माशि १०,२.
**वर्ष-वत्-**,वर्षा- प्रमृ. √वृष् (वधा.) द्र.
**वर्षादि-** १वर्ष- द्र.
**वर्षाली** (>°ली √कृ पा.) पाग १, ४,६१.
**वर्षितृ-**, वर्षिष्ठ- √वृष्(बधा.) द्र.
**?वर्षी-** -र्षीः कौसू १०३,२.
**वर्षीयस्-** √वृष् (बधा.) द्र.
**†वर्षु**[b]- -०र्षौ°[c] काश्रौ ६,५,१४; शुअ १,३८६; याशि २,१६.
**१वर्षुक**[d]- पाग २,४,६३.
**२वर्षुक-**,वर्ष-ज-, वर्ष्म- प्रमृ., १-२ वर्ष्य- √वृष् (बधा.) द्र.
**√वर्ह्** पाधा. भ्वा. आत्म. परिभाषण-हिंसाच्छादनेषु, पर. प्राधान्ये;[e] चुरा. पर. हिंसायाम्[e].
**√वल्** पाधा. भ्वा.पर.संवरणे संचरणे च.
**१वल**[f]-(>वालक-)
**२वा,४व**[g]**]ल**[b]- -†लः अप ४८,१०१; निघ १,१०; या ६, २ϕ; –लम् शांश्रौ ९,५,२†; बौश्रौ १८,३१: ११-१३;१५†;१९;२०; बृदे ६, ६४; माशि ४०†;–†लस्य आश्रौ १०,२, २२; आपश्रौ २२, १५, ११; बौश्रौ.
वल-भिद्- -भिदा[h] शांश्रौ १४, १४,१; आपश्रौ २२, ११, २०; हिश्रौ १७,५,१२;–भिदि बौश्रौ २३, १९: ३४[h]; –†भिदे[b] बौश्रौ १८, ३१: १६; १८.
**३ ?वल-**>°लं-करण[i]- -णात् आपमं १,१७,५†.
**†वलग**[b]- -गः आपश्रौ ११, ११, ८; बौश्रौ ६,२८: १५; वैश्रौ; –गम् आपश्रौ ११,११,८; बौश्रौ ६, २८: १२; वैश्रौ १४, ७: १०; हिश्रौ ७,६,९; शुप्रा ५,३५.
†वलग-हन्[b]- -घ्नः[j] आपश्रौ १२, २,१५[k]; माश्रौ २,२,३,३२; ३, १, २१; वैश्रौ १४, ९: १२?[k]; हिश्रौ ७,६, ३८; –हनः आपश्रौ ११, ११, ६; १२, ५; १२, २, १५; बौश्रौ ६, २८: ११××; वैश्रौ; –हनम् माश्रौ २, २, ३, ३३; ३४; ३९; –हनौ[l] आपश्रौ ११, १२, ७; १३, ४; बौश्रौ ६, २८: ३८; ४१-४३; वैश्रौ १४, ९: २; ४; ६; ७; हिश्रौ ७, ६, २८-३२; –हा आपश्रौ १२,२,१५; हिश्रौ ७,६, ३३?[m];३५?[m].
†वलगघ्नी- -घ्नी[l] माश्रौ २, २, ३,३६;३७.
**†वलगिन्-** -गिनम् अप ४६,४,१; ५,५.
**वलत-** पाउभो २,२,१३५.
**वलभि-** पाउभो २,२,२२९.
**वलभिकि**[n]- -कयः बौश्रौप्र १७: ९.
**वलभी-** पा,पाग ४,२,८२.
**वलय**[o]- पाउ४,९९; पा,पाग२,४,३१.
**वलाहक-** बलाहक- द्र.
**वलि,ली**[p]- पाउभो २,१,१६३; पाग ५,२,१००; –लीः कौसू २५,५.
वलि-न- पा ५, २, १००; –नः शांश्रौ १६,१८,१८.
वलि-भ- पा ५,२,१३९.
वली-पलित- -तम् शंध १५९: १.
वलीपलित-दर्शन- -ने विध ९४,१.
वलीपलित-भूयिष्ठ- -ष्ठाः अप ६८,१,११.
**वलिक-**( >वालिकायन- पा.) पाग ४,२,८०.
**†वलिशान-** -नः अप ४८, १०१[q]; निघ १,१०[r].
**वलीक-** पाउ ४,२५; –कानाम्[s] कौसू ७७,१७; –कानि कौसू ७५, १०[t]; –कैः[t] कौसू २५, ३७; ३०,१३.
वलीक-क्षार–प्रभृति- -ति मागृ १, ४,६; वागृ ८,६.
वलीक-पलल–ज्वाल[u]- -लेन कौसू २९,८.
वलीक-संतान[v]- -नम् गौध १६,१४.
**वा,ब]लूक**[w]- पाउ ४,४०.

---

*a*) पाठः ? वर्षो (सं१ [<वर्षु-]), बर्हिः इति द्विपदः शोधः (तु. मूको., सपा. याशि २, १५; १६)। *b*) वैप १ द्र.। *c*) पाभे. वैप १ वर्षीयः तै १.३,८,२ टि. द्र.। *d*) व्यप.। वर्मक- इति पाका.। *e*) तु. [पक्षे] BPG.। *f*) पृ १९५९ g द्र.। *g*) हिश्रौ. पाठः। *h*) = एकाह-विशेष-। *i*) व्यु. पाभे. च वैप १ वनंकुरण- टि. द्र.। *j*) पाभे. वैप १ वलगघ्नः मै १,२,११ टि. द्र.। *k*) °लघ्नः इति पाठः ? यनि. शोधः (तु. आपश्रौ. प्रमृ.)। *l*) पाभे. वैप १ वलगहनौ मा ५ २५ टि. द्र.। *m*) °हत् इति पाठः ? यनि. शोधः (तु. काठ २,११)। *n*) = ऋषि-विशेष-। *o*) = कङ्कण-। व्यु. वैप ३, ७४१ n द्र.। *p*) = त्वक्-शैथिल्य- (तु. मेधातिथिः [मनुः ६,२])। व्यु. ? <√वल् (संवरणे) इति अभा.। *q*) = पर्वत-। *r*) = मेघ-। *s*) = पटल-प्रान्त-। *t*) = [ज्वलनार्थ-] गृह-तृण-। *u*) द्वस.>तृस.। *v*) पंस.। *w*) = लोहित-वर्ण-। लोहित- वा कृष्ण- वेति काश्रौ २२,४,२२ भाष्यम्।

वा,ब[a]ाल्लूका( क-अ ) न्त[b]- -न्तानि काश्रौ २२,४,२२; आपश्रौ २२, ५,७; हिश्रौ १७,२,३५; लाश्रौ ८,६,२०.

व-लोपा(प-अ)प्रसिद्धि- २व- द्र.

√वल्क् पाधा. चुरा. पर. परिभाषणे, उभ. दर्शने.

वल्क- पाउ ३,४२.

वल्कल[c]- पाउभो २, ३, ११६; पाग २,४,३१; -लम् वैध १,३, ६; २,२,२.

वल्कल-वत् बौध १,६,१३.

वल्कलो(ल-उ)पवीता(त-आ)दि- -दीन् वैध २,५,८.

√वल्ग् पाधा. भ्वा. पर. गतौ> वलगन->°ना( न-आ )स्फोटन-प्रिय[d]- -याः अप ६८,१,४३.

वल्गा[e,f]- -ल्गाः भाश्रौ ८,९,१५†[g].

१वल्गु[i]-पाउ १,१९; पाग ३,१,२७[h]; ५, ३, १०८; -†ल्गुः आपश्रौ १५,१४,४; बौश्रौ ९,१४ : १०; भाश्रौ ११,१४,४; माश्रौ ४, ४, २०; वैश्रौ १३, १६ : ९; हिश्रौ २४,६,६; निघ १,११[i].

वाल्गुक- पा ५,३,१०८.

वल्गु-तम- -मम् द्राश्रौ ३,४,२†.

√वल्गूय पा ३,१,२७; †वल्गूयति अप ४८, ९[j]; निघ २, १४[k]; ऋप्रा ९,१६.

२वल्गु-(वालगव्य-L>°व्याय(न>) नी-⌋ पा.)पाग ४, १,१०५;१८.

३वल्गु- पाग ४,२,८२.

वल्गुल- पाउभो २, ३, ११०; -लः शंध ३७८[l].

√वल्भ् पाधा.भ्वा.आत्म.भोजने.

व(ल्म>)ल्मी[m]->१वल्मी-क,का- पाउभो २, २,२०; पाग २, ४, ३१; ४,२,८६[n]; -कः भागृ २, ३२ : २; हिगृ १, १७ : ५; अप ७०[3], ७, १; नाशि २, ८, २१; -कम् बौगृ ३,६, १; जैगृ २, ७ : ३; -कस्य याशि २, १०८; नाशि २,८,२०; -काः अप ६७, २,१; -कात् माश्रौ ६,१,१,१४; -कान् आपश्रौ १०, २०, ७; -काम् वाश्रौ २, १, १,७; -के वैश्रौ २०, ५ : ३; अप ७२, ३, ११; विध ६०,१०; वाध ६,१७; -केन कौसू ३१, २६; -केषु अप ६४,५,६.

?वाल्मीक[o]- -कात् कागृ ४, ६.

?वल्मीक-दीपिका[p]- -का काध २७६ : ६.

वल्मीक-वपा[i]- -पया आपश्रौ १८, ८, १४[2]; हिश्रौ १३, ३, २४; -पा वाधूश्रौ ४,१०४ : ७; शुअ ४,७४; -पाम् काश्रौ १६, २, ३; १४; २६,१, ३; आपश्रौ ५, १,७;९,८; ९,२, ४××; बौश्रौ; -पायाः आपश्रौ १६, २, ८; वैश्रौ १८,१ : २४; हिश्रौ ११, १, १९; -पायाम् आश्रौ ३, १०, २३; आपश्रौ ८, १८, ९; ९, २, ४××; बौश्रौ; -पाये बौश्रौ २२, १ : ८.

वल्मीकवपा-प्रतिनिधान- -नम् वैश्रौ १८,४ : ५.

वल्मीक-शत-मृत्तिका- -काः अप १,४४,५.

वल्मीक-शिरस्- -रसि कौसू २१, २३.

वल्मीक-संभूति- -तिः शांगृ ५, ११,१.

वल्मीका(क-अ)ग्र- -ग्रेण बौगृ ३, १०,३.

वल्मी(क>)का-वत्- पा ४, २, ८६.

२वल्मीक[n,q]- पाग ४,१,९६.

वाल्मीकि- पा ४,१, ९६; पाग ४, २,१३८[r]; -किः बौश्रौप्र ३ : ७; -किम् शंध ११६ : ४४; -केः[s] तैप्रा ५,३६; १८,६.

वाल्मीकीय- पा ४,२, १३८.

वल्या[n]- (>वालेयक- पा.) पाग ४, २,९५.

√वल्ल् पाधा.भ्वा.आत्म.संवरणे संचरणे च.

वल्लक->वल्लकी- पाउभो २, २, ७[t]; पाग ४,१,४१.

वा,ब[u]ाल्लभ- पाउ ३,१२५; पाग ६, २,८५[v].

वल्लरि- पाउभो २,१,२३०.

वल्लव- पाउभो २,३,१३४.

वल्लि,ल्ली- पाउभो २,१,१६३; पाग ४, २, १२७[w]; -ल्लीः अप ६८, २,२२; -ल्ल्यः अप ७१,१५,२.

*a*) आपश्रौ. हिश्रौ. पाठः । *b*) बस. । *c*) =वृक्ष-त्वच्- । *d*) द्वस.>बस. । *e*) =गल्दा- । *f*) वैप १ द्र. । *g*) पाभे. पृ ९६८ m द्र. । *h*) =पूजा-, माधुर्य- । *i*) =वाच्- । *j*) धा. अर्चायां वृत्तिः । *k*) धा. गतौ वृत्तिः । *l*) =पक्षि-विशेष- । *m*) १वल्मी- (तु. वैप १) । *n*) तु. पागम. । *o*) वल्मीकात् इति संस्कर्तुः शोधः (तु. आदित्यदर्शनः मूको. च; वैतु. देवपालः यनि. एव) ? । *p*) =वल्मीक- । *q*) व्यप. । *r*) वाल्मिकि- इति ⌊पक्षे⌋ भाण्डा. पासि. । *s*) =आचार्य-विशेष- । *t*) =वीणा- । *u*) पाउ. पाठः । *v*) पृ १५४७ q द्र. । *w*) पृ १५४७ m द्र. ।

वाल्लक- पा ४,२,१२७.
वल्ली-गुल्म-लता-च्छेदिन्- -दी विध ५,५७.
वल्ली-गुल्म-लता-वृक्ष- -क्षाणाम् बौध ३,३,५.
वल्लूक- पाउना ४,४२.
वल्लूर- पाउ ४,९०.
√वल्ह् पाधा. भ्वा. आत्म. परिभाषणहिंसाच्छादनेषु.
वव- पाग १,४,५७.
ववर्जिवस्-, ववर्जुषी- √वृज् द्र.
विविषिपुः अप ४८,६८†.
ववृधत्- √वृध् द्र.
वव्र[a,b]- -व्रः निघ ३,२३†.
†वव्रि[b]- -व्रिः अप ४८,७९; निघ ३, ७; -व्रिम् या २,९ϕ.
वव्रु- पाउभो २,१,२०.
†√वश् (बधा.)[c] पाधा. अदा. पर. कान्तौ, वशः आश्रौ ४,११,६. वष्टि निघ २,६; उशन्ति आशि १,२$; वश्मि अप४८,३[2]; निघ २,६; उश्मसि, >सी भाश्रौ ७, ८, १०; अप ४८, ३; निघ २, ६; या २, ७ϕ; ऋप्रा ८, ४५; तैप्रा ३,१३; वष्टु या ११,२६.
†उशत्- -शतः आश्रौ १, ६, २; आपश्रौ २४, १३, ३; बौश्रौ; या ६, १३ϕ; -शन् आश्रौ ५, १६, १; शांश्रौ ७, २२, ६; ८, १७,१; आपश्रौ; -शन्तः आश्रौ २,१९, ६; शांश्रौ ३, १६, २३; आपश्रौ; या ५,१८ϕ; -शन्तम् बौश्रौ ६, १५ : ९; भाश्रौ १०, १८,६; -शन्ता आश्रौ ८, १०, १; बृदे ६,१८.
उशती- -†ती आपमं १,११,६; पागृ १,४,१६; आग्निगृ १,५,३: ११; कागृ; -तीः आश्रौ १, १०,५; ५, २०,६; आपश्रौ १०, ३०, १५; भाश्रौ १०, २१,१४; हिश्रौ; -तीम् कौसू ४, २; -त्यः या १२, ४५; -त्यौ या ९,३९.
१वश,शा[d]- पावा ३,३,५८; -शः वाधूश्रौ ४, ५९ : ८; अप ३५, २,९; आपध २, ७, १४†; हिध २,२, ३३†; अअ १५, ११[2]†; या ५,१३; -शम्[e] शांश्रौ १३, २४, १४; आपश्रौ २२, १६, १०†; बौश्रौ ४,२:३९; ६,३० : १९; वाधूश्रौ; -शा अप ५, ५, २; -शाः अप ३५, १,९; २,२; -शात् बृदे २, ९३; -†शान् आपश्रौ ३, १५, ५; बौश्रौ ५, १५ : ११; द्राश्रौ; हिपि १८ : १०[f]; तैप्रा ९, २१; -शे काश्रौ १०, ८, ३१; आपमं २, ११, ३२†; आग्निगृ २, १, ४ : १६†[g]; भागृ १, २५ : ९†[g]; हिगृ २, ४, २†[g]; कौसू.
वशं-वद- पा ३,२,३८.
वश-गमन- -ने या ६,३२;१०, ४०.
वशं-गम[h]- -मानि ऋप्रा ४, १४[i]; -†मौ गोगृ ४, ८, ८; द्रागृ ४,२,२४; कप्र ३,१०,१७.
†वश-नी[b]- -नीः आग्निगृ ३,६, १ : ५; बौपि १,८ : ५.
वश-वर्तिन्- -०र्तिन् विध ९८, ५२[j].
वशिन्[b]- -शिना काश्रौ ९, १३, २०[k]; १०,३,७[k]; -†शी आश्रौ १,११,१; ६,२,१२; ३,१६; ८, ९,७; शांश्रौ १०,११,९ आपश्रौ.
†वशिनी- -नी आपश्रौ १९, १७,१०; बौश्रौ १०,४९ : ११; १४, १५ : ११;१२; हिश्रौ; -न्यै[l] आग्निगृ १, १,३ : ४४; हिगृ १,६,५.
वशी √कृ >वशी-करण- -णम् पागृ ३,१३,७.
वशी-कर्तुम् अप ३६,५,१;३; ७,१.
वशी-कुर्वत्- -र्वन् अप ३५, १,६.
वशे √कृ पा १,४,७४.
१वश्य- पा ४, ४, ८६; -श्यः आपगृ ९, ७; -श्यम् अप ३५, २,५.
२वश्य[m]->वश्य-कर्मन्- -र्मणि अप २१,३,२.
वश्या(श्य-आ)दि- -दौ अप २५,१,११.
१†वावशान,ना[b]- -नः निघ ४,२; या ५,१ϕ; -नाः या १४,१४; १५.
२वश[n]- -शः शांश्रौ १६,११,२३; ऋअ २,८,४६; साअ १,१९३;२०६; २६५; -शम् शांश्रौ १८,१४,१[o];

*a*) =कूप-। *b*) वैप १ द्र.। *c*) या ५,१; ६,१०;१२,५ पा ६, १,१६;२० परामृष्टः द्र.। *d*) भावे कर्तरि च प्र.। *e*) क्वचिद् वा. क्रिवि.। *f*) पाभे. वैप १, १३४८ h द्र.। *g*) सपा. आपमं २,१३,१ गृहे इति पाभे.। *h*) उस. उप. √गम् + खच् प्र. (पावा ३, २,३८)। *i*) =व्यञ्जनसंधिविशेष-। *j*) =विष्णु-। *k*) =रिक्त-। *l*) =देवी-विशेष-। *m*) भावे यत् प्र.। *n*) =ऋषि-विशेष-। *o*) =(⌊उपचारात्⌋ तद्दृष्ट-) सूक्त-।

-शाय बृदे ६, ७९; -शे ऋप्रा १७,२९.

१वाश[a]- -शम् शांश्रौ १६,११, २२.

१वशा- √वश् द्र.

२वशा[b]- पा २,१,६५; पाग ८,२,९; -शया बौश्रौ १४,१४ : ८;१७, १५ : १; ३; माश्रौ ६, २, ६, २४; वाश्रौ २, २, ५, ८†; कौसू ४५,१९; -शा आश्रौ ९,४,१५; शांश्रौ ८, १२, ५; १४,२, १५; २१××; काश्रौ; बौध २, २, ६३[c]; -शाः आपश्रौ १६, ३२, ४; १९,३, २†; २०, १४, ७†; २२, १०; बौश्रौ; -शानाम् माश्रौ ५, २, १०, ३२; -शाम् आश्रौ १२, ७, १२; काश्रौ १४, २, ११; १५, ८, २३; आपश्रौ; -शायाः काश्रौ १४,२,२३;वाश्रौ ३,१, २, ४४; अप्र १०,१३†; -शायाम् शांश्रौ १३,३,५; हिश्रौ १७, ३, १३; जैश्रौ २५ : ५; द्राश्रौ २, २, ४८; लाश्रौ; -शायै बौश्रौ १३, १६ : ११†; १४, १४ : २६; २१, २४ : ७; २६ : २; -†०शे आपश्रौ ९, १८, २; बौश्रौ २८, ६ : १०; वैश्रौ २०, ३५ : २.

२वाश[d]- -शम् वाश्रौ ३,२, ५, ४५.

३वाश[e]- -शम् जैश्रौ २५ : ५; द्राश्रौ २,२,४८; लाश्रौ १,६,४५

वशा-चर्मन्- -र्मं काश्रौ १३,३,१६.

†वशा(शा-अ)न्न[b]- -न्नाय आश्रौ ५,५,१८; आपश्रौ १६,३५, १; बौश्रौ; १३, ६ : २; हिश्रौ.

वशा-पशुपुरोडाश- -शात् वैताश्रौ २४,१३.

वशा(शा-अ)भाव- -वे काश्रौ १०, ९,१५.

वशा-मत्- पा ८,२,९.

वशा(शा-अ)वदान-काल- -ले काश्रौ २५,१०,१०.

वशा-वपा-प्रचरण- -णम् काश्रौ १४,२,१६.

वशा-वपा-मार्जना(न-अ)न्त[f]- -न्तम् काश्रौ ८,८,३७.

वशा-वत् मीसू २,१,१५.

?वशा-विधानी- -न्यै वाधूश्रौ ३, ६१ : ८.

वशा-शमन- -नम् कौसू ४४,१.

वशे(शा-इ)ष्टका[g]- -काः वैश्रौ १८, २१ : ७; हिश्रौ ११,८,९.

३वशा[h]- ·०शाः माश्रौ ५,२,६,५†.

वशिष्ठ[i,j]- पाग २, ४, ६३[k]; ४, २, ८०[l].

वाशिष्ठायनि- पा ४,२,८०.

वशीक[i,k]- पाग २,४,६३.

वश्मसा (>°सा √कृ पा.) पाग १, ४,६१.

†?वश्वात्र[m] शांगृ ३,११,१४.

√वष् पाधा. भ्वा. पर. हिंसायाम्.

वषट्[n] †आश्रौ ३,१३,१४; शांश्रौ १, ८,८†; आपश्रौ; माश्रौ ४, ३, २६†[n]; हिश्रौ २४, ४, ९†[n]; पाग १, १, ३७; ४, ५७; ६१.

वषट् √कृ पा १,४,६१; वषट्करोति शांश्रौ ५,१९,१७; ९,२०, ३२; १०,२१,२; आपश्रौ ५,२८, ८; ८, १५, ११××; बौश्रौ; वषट्-कुर्यात् आश्रौ ९,७, ११; शांश्रौ १,२,१८; आपश्रौ.

वषट्-करिष्यत्- -ष्यन् या ८, २२†.

वषट्-कर्तृ- -र्ता आश्रौ ५, ९, २८; शांश्रौ ७,४,१४; आपश्रौ; -र्तारः आश्रौ ५, ३, १२;८,८; बौश्रौ ७, ११ : ७; वैश्रौ १५, २४ : ६; -र्तुः काश्रौ ९,५,२७; २९; बौश्रौ १७,४ : १३; द्राश्रौ; -र्तॄणाम् वैश्रौ १५, ३१ : ७; २१, १२ : ५; हिश्रौ ८,७,३८; -र्त्रा जैश्रौका १३८.

वषट्-कार[b,o]- -†०र आपश्रौ २४,१४,१२[१]; बौश्रौ३,२८:१८; हिश्रौ; -रः आश्रौ १, ५,५;१५; १८; २, १९, १९; ८, १३,१७; शांश्रौ १, १, ३४; ३६; काश्रौ; निसू १,१३ : २; आगृ ३,४,१; कौगृ २,५,१; शांगृ; -रम् आश्रौ १,५,१७; वाधूश्रौ ३, ९८ : २; ४; ४, ५९ : ९; हिश्रौ २१, २, ४५; -रयोः हिश्रौ ८, ७, ४०; -रस्य शांश्रौ १, १, ४२; माश्रौ ४, ३, २७; हिश्रौ; -†राः आपश्रौ ४, ११, ६; बौश्रौ ३, २८ : २१; भाश्रौ; -†राणाम् बौश्रौ ३,२८ : १७; आपध १, १२, ३; हिध १, ४, ३; -रात्

---

*a*) = ⌊तत्संबन्धिन्-⌋ आख्यान-। तस्येदमीयः अण् प्र.। *b*) वैप १ द्र.। *c*) = वन्ध्या-स्त्री-। *d*) विकारार्थे अञ् प्र.। *e*) = साम-विशेष-। *f*) षस. > द्वस. > बस.। *g*) = इष्टका-विशेष-। मलो. कस.। *h*) २वशा- (तु. वैप १)। *i*) व्यप.। *j*) वशिन्- + ष्ठ- (< √स्था) इति पागम.। *k*) तु. पागम.। *l*) अर्थः?। *m*) पाठः? (तु. टि. ?सास पागृ ३, ९, ६)। *n*) पाभे. वैप १, ८२५ a द्र.। *o*) = (होतृकर्तृक-) वौषट्-मन्त्र- (तु. सा ⌊ऐब्रा ३,५⌋, पाका. ⌊१,२,३५⌋)।

आश्रौ १, १२, २१; काश्रौ ३, ३, १६; आपश्रौ; –राय चाअ ३० : २†; –रे आश्रौ ५, ६,२३; शांश्रौ १, २,१३; माश्रौ; मीसू १२,३,३५; –रेऽ-रे माश्रौ १, ८, ६, ६; –रेण आश्रौ १, ३, २२†; काश्रौ १८, ४, ४; आपश्रौ; –रेषु शांश्रौ १३,२,८; ३,५; –रौ आश्रौ २,१६,१५.

वषट्कार-क्रिया– -यायाम् आश्रौ २,१९,२७.

वषट्कार-णि[a],निधन[b]– -नम् काश्रौ २५, १२, २३; आपश्रौ १४,२५,११; माश्रौ ३, ६,११; हिश्रौ; क्षुसू १,४ : ६; ९ : ४; १३; –नात् क्षुसु १, ४ : १०; ९ : ९, १०; –नेन शांश्रौ १३, १२, १; वैश्रौ २१, ११ : ५.

वषट्कारणिधन–ब्रह्म-सामन्[c]– -मा क्षुसू १,९ : ११.

वषट्कार-निमित्त[c]– -त्तः वैश्रौ १५,३१ : ७.

†वषट्कार-पथ– -थः बौश्रौ १६,९ : ५;६; –थेन बौश्रौ १६, ९ : ४.

वषट्कार-प्रदान[c]– -नाः काश्रौ १,२,६; –नानाम् माश्रौ १, ६, ४,६.

वषट्कार-व(त्>)ती– -तीः माश्रौ १,३,१,३१.

वषट्कार-व्यवाय– -ये हिश्रौ ८,७,४०.

वषट्कारा(र-अ)नुमन्त्रण– -णम् आश्रौ ८, १३,१८.

वषट्कारानुमन्त्रणा (ण-अ)भिहिङ्कार–वर्जम् आश्रौ २, १९,३.

वषट्कारा(र-अ) नुवषट्कार– -रे वैश्रौ १५, ३६ : १६; –रेण वैश्रौ १७,१७ : ७; –रौ आपश्रौ १२,२८,१; १८,७,४; २१,१०, ८; हिश्रौ ८, ८, ३३; १३, २, ३१.

वषट्कारा(र-अ)नुवषट्कृत– -ते हिश्रौ १५,७,९.

१वषट्कारा(र-अ)न्त[d]– -न्ते वाश्रौ १,१,१,५२.

२वषट्कारा(र-अ)न्त[c]– -न्तेषु वाश्रौ १,६,७,२३.

वषट्कारान्ता( न्त-आ ) प्यायन[e]– -नान् वैताश्रौ १५,२.

वषट्कारा( र-अ )न्वय[c]–त्व– -त्वात् आश्रौ ५,६,२३.

वषट्कारि(न्>)णी– -ण्यः निसू ३,८ : १४.

वषट्कारेणा(ण-अन्त>)-न्ता[c]– -न्ताः अअ १५,१४.

वषट्कारो(र-उ)पह्वान– -नाभ्याम् काश्रौ १०,६,२२.

वषट्-कारम्ऽवषट्-कारम् भाश्रौ ७,२१,११.

वषट्-कारिन्– -रिणः लाश्रौ १०, १२, १२; –रिभ्यः लाश्रौ ९, ६,१.

†वषट्-कृत– -तम् आपश्रौ ३, ११, २; बौश्रौ १, २१ : ९; भाश्रौ; –तात् बौश्रौ २७,४:२५; –तानाम् वैश्रौ २०,२४: १०;–ते आश्रौ ४, ७, ४; ५, १८, २; शांश्रौ; –तेऽ-ते आपश्रौ ७,२६, ११; १३, १२, ७; –तेन माश्रौ २, ५, १, १०; ४२; २, १४; ४, ३, २६; ५, ६.

१वषट्कृता(त-अ) नुवषट्-कृत[f]– -तः बौश्रौ २१,२२ : ६.

२वषट्कृता(त-अ)नुवषट्कृत– -तान् आपश्रौ १२, २३, ४†; वैश्रौ १५, २९ : १२; ३८ : ११××; हिश्रौ; –ते आपश्रौ १२, २३, १७; २६, ६; १८, १४; १३, १६, ७××; बौश्रौ; –तेषु वैश्रौ १५,३० : १४.

वषट्-कृति[b]– -तिः जैश्रौका १६४.

वषट्-कृत्य शांश्रौ १, ९, ३; ५, १०, १८; २१; आपश्रौ; वषट्-कृत्यऽवषट्-कृत्य हिश्रौ २१, २,४५.

वषट्-क्रियमाण– -णे वैश्रौ ६,६ : ३.

†वषाट्[g] आपश्रौ २४,१४,११; हिश्रौ २१,२,३७.

वष्कय– बष्कय– द्र.

√वस् (बधा.)[h] पाधा.भ्वा. पर.,चुरा. उभ. निवासे, वसति काश्रौ ५,४, १; आपश्रौ ७, ६, ३; ११, ५, ६××; काठश्रौ; वसतः आपश्रौ १७, २६,१५; १८; बौश्रौ २९, ९ : १३; हिश्रौ १७, १, १३; हिए; वसन्ति शांश्रौ १८, २३, १८; काश्रौ २२, ३, ३१; आपश्रौ; वसथः या ३, १५; वसामि विध ९९, ९; वसः अप १८[३], १, ९; वसतु वाधूश्रौ

a) क्षुसू. पाठः । b) वैप १ द्र. । c) बस. । d) =वषट्कारानन्तर- । e) कस. उप. =मन्त्र-विशेष- । f) विप. । कस. । g) =वषट् । h) बृदे ५, १५६ या १०, १६ पा १,३, ८९; ६,१,१५; ८,३,६० पावा ३,२,११० परामृष्टः द्र. ।

४, ७० : २; †वस आग्निगृ १, १,३ : ३३; भागृ २, २८ : ९; हिगृ १, ५, १३; †वसानि भागृ २, ३२ : १५; बौध १,२, ५४; अवसन् शांश्रौ १६, ९, १६†; वसेत् आपश्रौ ५,२५,४; ६,२८, ५;९,१,१०; भाश्रौ ५,१६, १३; माश्रौ; वसेयुः माश्रौ ५, २, ६, १४; लाश्रौ ८,३,१२; १०, १६, ७; मागृ २, ३, ७; शंध २७२; †वसेम माश्रौ २, ३, ७, ५; पागृ ३,२,२.

उवास बौश्रौ १८, ४४ : १६; ४५ : २१; बृदे ७, ४२; ऊषतुः शांश्रौ १५, १७,१; बृदे ६,३५; या ३, १५†$\phi$; वत्स्यामि बौश्रौ १८, ४५ : १९; शांगृ २, १८, २†[a]; †वत्स्यावः कौगृ २,८,८[b]; आग्निगृ १,१, ३ : ३२[2]; वैगृ २, ६ : ७; हिगृ १, ५, १३[2]; †वत्स्यामः आगृ ३, १०, २[a]; भागृ २,२८ : ६; ७; अवात्सीत् बौश्रौ १८, ४५ : २; वात्सीत् काश्रौ १५,३,२१†; †अवात्सीः आपध २, ७, १३; हिध २, २, ३२; अअ १५, ११; †वात्सीः बौश्रौ १५,३७ : ४; वाधूश्रौ ३, ९९ : ८.

वासयति काश्रौ ८, ८, १६[b]; आपश्रौ १४, ५, १२[b]; १७, ४, ८; माश्रौ; हिश्रौ ९,८,७[b]××; वासयन्ति बौश्रौ १७,११ : १५[b]; वासये वाध २०,२६[c c]; †वासय द्राश्रौ १३,१,१४[a];१५; वासयेत लाश्रौ ५, १, १२[d]; वासयेत् द्राश्रौ ५, २, ४; लाश्रौ २,६,१; गोगृ ३, ८, ७; द्रागृ.

उषित– पा ३, ४, ७२; ७,२, ५२; –तस्य वैगृ ५, ९ : ९; –तानि या १४,६†; –ते वैगृ ३,१६:१.

उषितवत्– पा ७,२,५२.

उषित्वा आपश्रौ ६, २८, ६; बौश्रौ.

उष्य पागृ २,११,१३.

वत्स्यत्– -त्स्यन् बौश्रौ ६,९ : ११; कौसू १७,३०.

वसत्– -सतः वाधूश्रौ २, ७ : २; चाअ १६ :१२; –सताम् आपध १, ५, १३; हिध १, २, १३; –सतोः बृदे ६, ३६; –सन् शांगृ २, १७, २; बौध २, ३, ५३; विध; –सन्तः काश्रौ २४, ६, ५; पागृ १, १२, ४†; वैध १,९,४[2]; –सन्तम् बौश्रौ १४, ५ : २९.

वसन्ती– -न्ती बृदे ६,४०.

वसति,ती[e f]– पाउ ४,६०; –तयः निसू ५, १२ : ९; –तिः आपश्रौ २०, ५, १८; वैताश्रौ १२, १; विध १, ३२; ऋप्रा ४, ६२†; शुप्रा ३, २३†; –तिम् हिपि १४ : ४†; वाध १०, १२; शंध ३७०; विध ९६,३०; ३७;९९, ६; सुध ५५; –त्या या १०, २१†$\phi$; –त्यै आपश्रौ ५, २५, ५;९,३,८; भाश्रौ ५,१६,१४;९, ४,१०; वैश्रौ.

वासतेय– पा ४,४,१०४.

वसतिं-गम– -मः हिगृ १, १७, ३†.

वसती-व(न् >)री[f g]– -रीः आश्रौ ४,१२,८; शांश्रौ १४,२२, १९××; काश्रौ; –रीणाम् शांश्रौ ८, १५, ६; आपश्रौ ११, २०, १३; बौश्रौ ७,४ : ९××; माश्रौ; –रीभिः काश्रौ ९, ३, ३†; आपश्रौ १२, ५, २†; ७, १०; ९, १; बौश्रौ ७, ३ : ९; २९, १ : ४; १४; माश्रौ; –रीभ्यः आपश्रौ १२, ६, १; १३, १, ३; बौश्रौ ८,१ : ४××; वैश्रौ;–रीषु आपश्रौ १४, ९,३; १७,३; २१, २४, ३;२२, ८, १६; काश्रौसं; –र्यः शांश्रौ १४, ४०, १०; ४१,९; वाश्रौ ३, ३, १, ५९; द्राश्रौ २,४,७.

वासतीवर[h]– -रः वाधूश्रौ ४, ७० : ४; ७३-७४ : १; –रम् काश्रौ २५, १३, २३; –रस्य बौश्रौ २५, २१ : १?[i]; –रात् बौश्रौ २१, १७ : २; –रे ऋअ २,१,१६६; बृदे ५,१४९.

वासतीवार[h]– -राणाम् चाअ ३ : ५.

वसतीवरि-ग्रहण– -णम् काश्रौ ८,९,६;१३,४,२७.

वसतीवरि-तृतीय– -यम् काश्रौ ९, ३, १८[j].

वसतीवरि-परिहरणा(ण–आ) दि[k]– -दि काश्रौ १२, ४,२.

वसतीवरी-कलश– -शः बौश्रौ २९,६ : १७; –शम् बौश्रौ ८,८ : २७; –शे बौश्रौ १६, ३ : ५.

---

*a*) परस्परं पाभे.। *b*) परस्परं पाभे.। *c*) धा. प्रीणने वृत्तिः। *d*) परस्परं पाभे.। *e*) भाप. (निवास-), नाप. (गृह- प्रभृ.)। *f*) वैप १ द्र.। *g*) विप. (२अप्-)। *h*) विप. (उदक-, कुम्भ- प्रभृ.)। तस्येदमाद्यर्थे अणि प्र. वा उभयपदवृद्धिः। *i*) वस° इति पाठः? यनि. शोधः। *j*) °रीतृ° इति अच्यु.?। *k*) °तीपरिह° इति अच्यु.?।

वसतीवरी-त्व- -त्वम् वाधूश्रौ ४,७०:३.

वसतीवरी-पर्यन्त[a]- -न्तानि मीसू ११,४,१९.

वसतीवरी(य>)या- -याः बौश्रौ २५,१७:५.

वसतीवर्य(री-अ)र्ध- -र्धम् काश्रौ ९,१४,१७.

१वस्तु- पाउ १, ७०; -स्तुम् वागृ १४, ३[b].

वास्त्व- पा ६, ४, १७५.

वस्त्य- पाउभो २,३,४.

वावसान[c]- -ना ऋप्रा ९,३२†.

१वास[d]- पा ६,३, १८; -सः काश्रौ २५,१३,२२; आग्निगृ २,५, २:२२; अप ७०[3], ६, ५; ९, २; आपध २,२१, ३[e]; बौध २, १, ४७; हिध १, १, ४४[f]; -सम् अप्राय ५, ३; अप ७०[3], ११, १७; -सात् शांगृ २, १२,१०[g]; -से आश्रौ ३, १२, १०[g]; १४, १८[h]; काश्रौ १६,६,२१; आपश्रौ ६, २८, १२[i]; माश्रौ १,४, १, १०[j]; ५,१,३३[k]; -सेऽ-सें आगृ १,८,७; -सेन विध २३,५७.

वास-गृह- -हम् अप ४,५, १४; ६,२,६.

वास-रथ- -थे अप ७०[3], ११, १५.

वासा(स-अ)नपनोद- -दः काश्रौ २५,४,३[k].

वासा(स-अ)र्थ->°र्थिन्- -र्थी वाध ८,६.

वासयित्वा गो २,१६; कौसू ७,१९.

वासित- -तम् कौसू ११,१९; १६, २९; १९,२५; -तान् कौसू १९, २२; ४१,१३.

१वासिन्- पा ६,३,१८; -सिनः वैध १,९,५; -सी पा ४, ४, १०७.

१वास्तु[b,o]- पाउ १,७०; पाग २,४, ३१[l]; -स्तु बौश्रौ १४, ५:४५†; हिश्रौ ३,८,२; आगृ २, ८, १; ९, ९[2];†; कौगृ ५, २, १३†; पागृ; -स्तुः या १०, १६ф; -स्तुनः वैगृ ३, १६:१०; -स्तुनि वैगृ ३, १६:१; -स्तूनाम् आज्यो ५,९; -स्तूनि या २, ७†; -स्तोः जैगृ २, ६:५; -†०स्तोः शांश्रौ २,१६,२[2]; आपश्रौ ६, २८, ८; बौश्रौ १४, १९:२५; २६; भाश्रौ ६,६,७; माश्रौ १, ६, ३,१[2]; वाश्रौ; भागृ २, ४:३[2]; ७[m]; हिगृ १, २८, १[v,m]; -स्तौ बौश्रौ १४, १९:२०; कौगृ ५,२,१३.

१वास्तव- > °वी- -वीः शुअ १,२१०.

† १वास्तव्य[c]- -व्यम् बौश्रौ १४, २४:३१; ३२; -व्याय माश्रौ ६,२,४,३.

वास्त्व्य- पा ६,४,१७५.

वास्तु-करण- -णे कौगृ ३, २, १५.

वास्तु-कर्मन्- -र्मणि कप्र ३, ७,१०; अप २४,१, २.

वास्तु-गृह[n]- -हे आग्निगृ २, ६, ४:२२; शंध १३२.

वास्तु-देव- -वम् आग्निगृ २,५, ११:२२.

वास्तु-देवता- -ताभ्यः आगृ १, २,४†.

वास्तु-दैवत- -ताः आग्निगृ २, ५,११:२३†.

वास्तु-द्वार- -रम् कप्र ३, १०, १६.

†वास्तु-पति- -तये आग्निगृ १, १,४:२६; हिगृ १, ७, २१; -०ते वैगृ १,१९:३.

वास्तु-परीक्षा- -क्षा आगृ २, ७,१.

वास्तु-पा(ल>)ली[o]- -ल्यै बौगृ २,८,१३†.

वास्तु-पृष्ठ- -ष्ठे वैगृ ३,७:२१.

वास्तु-प्रदान- -नेन विध ९२, ३१.

वास्तु-बलि- -लिम् जैगृ २, ६:५.

वास्तु-मध्य- -ध्यम् बौगृ ३, ५,६;९; -ध्ये कौगृ ३,१०, ४; शांगृ २,१४,५[2]; बौगृ २,८,२३.

वास्तु-विद्या-(>वास्तुविद्य[p]- पा.) पाग ४,३,७३.

वास्तु-विभाग- -गः शंध २७८.

वास्तु-शम- -मम् आग्निगृ २, ४,१:२३.

a) तु. जीसं. प्रमृ. । बस. । b) =गृह- । c) वैप १ द्र. । d) भाप., नाप. । e) पाभे. पृ १८२६ h द्र. । f) पाभे. पृ १८२६ e द्र. । g) रात्रेः पूर्वश्चतुर्थो भाग इति भाष्यम् । h) सपा. वासेऽनवरोधः <> वासानपनोदः इति पाभे. । i) नाप. [वास-स्थान- (तु. सप्र. हिश्रौ ३,८,११ C. च; वैतु. भाष्यम् भाप. ⌊रात्रिवास-⌋ नाप. ⌊रात्रि-⌋ वेति भाष्यम्)] । j) =रात्रि- (तु. आपश्रौ ⌊६, २८,१२⌋) । सप्र. आपश्रौ ४, ३, ७ सायमाशे इति पाभे. । k) =वस्त्र-गृह- (तु. सप्र. आपश्रौ ५, ७, १७ गार्हपत्यायतनम् इति पाभे.) । l) तु. पागम. । m) पाभे. वैप १,१२९९ c द्र. । n) =वास-गृह- । o) =देवता-विशेष- । p) =ग्रन्थ-विशेष- ।

वास्तु-शमन- -नम् बौगृ ३, ५, १;२१; भागृ २, ५ : १; हिगृ १,२७,९;२८,२.

वास्तु-संस्कार-कर्मन्- -र्मणि अशां १७,३.

वास्तु-सवन[a]- -नम् वैगृ ३, १६ : १; -नस्य वैगृ ३, १६ : ५; १७ : १६; -नेन वैगृ ३, १६ : ४.

वास्तु-होम- -मम् वैगृ ७, ४ : ९; -मे मीसू ८,४,३.

वास्तुहोमो(म-उ)त्थानहोम- -मौ वैगृ ६, ४ : ११.

वास्तोष्-पति[b]- -†तये आपश्रौ १३, २०, १; बौश्रौ २८, ९ : २५; वैश्रौ १६, २४ : २; कौगृ ३, १०, ५; शांगृ २, १४, ५; कागृ ५४, १$; बौगृ २, ८, ३३; ३, ५, १८; वागृ १७, ४$; वैगृ ३,७ : १०; कौसू ४३, १३; ७४, २; आपध १, ३१, २१; विध ६७, ३$; हिध १, ८,४०; -तिः बौश्रौ १४, १९ : १७; अप ४८, १३७†; बृदे १, १२३; ६,४८; साअ १, २७५; अअभू २; या १०,१६ф; -तिम् जैगृ २,६ : ५; बृदे २, ४४; -तीन् अअ १,३१;७,६०; -तौ अप ३३,५,६.

वास्तोष्पति-गण- -णस्य अअभू २.

वास्तोष्पति-शाला-दैवत- -तम् अअ ३,१२.

वास्तोष्पतीय- पा ४, २, ३२; -यः अप ३२ १, ५[c]; -यम् शांश्रौ २,१६,१; आपश्रौ ६, २८, १; बौश्रौ १४, १९ : १७××; भाश्रौ ६,६,७; वैश्रौ २, ११ : ३; हिश्रौ ३,८,२;६; बौगृ ३,५,२; बौध ३,१,१०; -यस्य कागृ १२, १; -यानि[c] कौसू ८,२३; अप ३२, १, ५; -ये बौश्रौ २४,१७ : ३; शांगृ ३, ४,१; -येन बौगृ ३,५,५; -यैः कौसू ४३,४[c].

वास्तोष्पत्य,त्या- पा ४, २, ३२; -त्यः अशां २३, १[c]; -त्यम् वाश्रौ १, ५, ४, ४०; मागृ २,११,१९; अप ७०[3], १०, ६; ऋअ २, ७, ५४; अअ १, ३१; ५, २७; ७, ६०; -त्या अशां १६,१[d]; ऋअ २, ७, ५५; -त्याः बृदे ६, २; -त्याम् अशां १७,३[d]; १८-१९,५; -त्ये अअ ५,१०; -त्यैः[c] वैताश्रौ ५, १०; कौसू १२०,९; अप ३३,५,६.

वास्तोष्पत्य-गण- -णः अशां १८,५.

वास्तोष्पत्या(त्य-आ)दि- -दिभिः अप ३०[2],१,१५;-दीनि कौसू ४३,५[c].

२वास्तव्य- पावा ३,१,९६.

१वास्य[e]- -स्यः हिध २, ५,२१६[f].

√वस्[g] पाधा. अदा. आत्म. आच्छादने, वस्ते शांश्रौ ३,८,१२; काश्रौ ४, ७, १२; ७,२,१५; २२,७,१७; आपश्रौ; वसते शांश्रौ १८,२४, ४;७; या ७, ३१†; †वसाथे आश्रौ ३,८,१; आगृ ३, ८, ९; †वसिष्व,> ष्वा आश्रौ ४, १३, ७; ऋअ २,१,२६; बृदे ३, ९९; ऋप्रा ७, ३३; वध्वम् शांश्रौ ४,५,२†; वसीत आपश्रौ १३,१९,८; भाश्रौ ५, १३, ९; वैताश्रौ ११, २१; कौगृ ५, १, १४; आग्निगृ; वसीरन् आगृ १, १९, ११[2]; आग्निगृ ३, ६, २ : ८; वसीथाः बौश्रौ १८, ४४ : १५.

वसिष्ट आश्रौ ८,१, ८†.

वास(य>)या ऋप्रा ८, २८.

वसन[h]- -नम् आश्रौ १, ६, १०; काठश्रौ १४६; माश्रौ १, ६, ४, २८; २,५,४, ३४; वाश्रौ; विध २७, २८××; -नस्य शांश्रौ १५, १३, १५; बौश्रौ ६, २ : ९; ३ : ८; ५ : १२; १३; १९××; द्राश्रौ; -नानि बौश्रौ ११, १ : ७; द्राश्रौ ११, ४, १६; लाश्रौ ८, ६, २०; गोगृ २, १०, ७; वैध ३, ५, ११; -नानाम् बौश्रौ ११, ६ : २७; १२, ७ : ३८; -नाय या ८, ९; -ने आश्रौ ४, ४, ७; माश्रौ १,५,६,८; २, ४, ४, २; कौसू ५३,२;८३, २०××; -नेन द्राश्रौ ५, २, ४; ५; लाश्रौ २, ६,१;२; निसू १,११ : ८;१२; गोगृ २,१,१७××; कौसू.

१वासन- पा ५,१,२७.

वसन-कनक-दान->°न-देव-पूजा-गुरुगोष्ठनिषेवित- -तानि अप ६८,२,६२.

वसन-कम्बल- -लम् वागृ ६, २८.

---

*a*) =वास्तु-यज्ञ- (तु. भाष्यम्)। वास्तुशमन- इति C.। *b*) वैप १ द्र.। *c*) =मन्त्रगण-विशेष-। *d*) =शान्ति-विशेष-। *e*) धा. निर्वासने वृत्तिः। *f*) सपा. आपध २, २६,२१ नाश्यः इति पामे.। *g*) या ४, २४ परामृष्टः द्र.। *h*) =वस्त्र-।

  

वसन-केश-कीटो( ट–उ )पहत– -तम् वाध १४,२२.

वसन-दशा( शा–अ )न्त– -न्तः विध २४,८.

वसन-म(य>)यी– -यीः लाश्रौ ८,११,२३.

वसन-वत्– -वतः गोगृ ४,९,९.

वसन-विकल्प– -ल्पाः निसू १, ११ : ९.

वसना(न-अ)न्त– -न्तान् काठश्रौ १५६

वसना(न-अ)न्तर– -रम् बौश्रौ १७,३९ : ४.

वसना(न-ऋ)र्णे– पावा ६,१,८९.

१वसान,ना– -नः आपश्रौ १४,१३, ३; १६, २५, २†; २२, ९, ५; काश्रौसं २८ : १७; बौश्रौ १२, ९ : ९†![a]; १४,७ : २४†××; वाधूश्रौ; –ना आग्निगृ २, ४, १ : ३१†; भागृ २, ३, १४†; हिगृ १, २७, ८!†[b]; –नाः मागृ २, ७, १†; कौसू ३, ३; या ७, २४†; –नान् वैगृ ५, १३ : ९; –नौ आपश्रौ ५, ४, १०; १३, २२, २; भाश्रौ ५,२,२२.

वसित्वा जैश्रौका ११; विध २८,४९.

†वसुक[c]– -कः बौश्रौ १४, २० : ११; द्राश्रौ १५, ३, ८; लाश्रौ; –कम्,-काय द्राश्रौ १५, ३, ८; लाश्रौ ५, ११, ८; वैताश्रौ २६, १४.

वस्तृ– -स्ता कौसू १०७,२†.

वस्त्र– पाउ ४, १५९; पाग २, ४, ३१; –स्त्रम् काश्रौ ७, ८, १४†; †बौश्रौ ६, ८ : १; १४ : २७; जैश्रौका १५३; आपमं; आग्निगृ ३,५, २ : ६†[d]; या ४, २४ф; –स्त्रस्य माश्रौ १, २,५, १२; मागृ १, ११, ६; विध ६, १३; २३, ६; –स्त्राणाम् बौगृ ४, २, ५; वैध ३,१५,१०; –†स्त्राणि आश्रौ ३, ८, १; शांश्रौ ८, १२, ८; लाश्रौ; –स्त्रात् पावा ३, १,२१; –स्त्रे आपश्रौ १२, ११, १०†; हिश्रौ ८,३,३१; जैश्रौका १०; अप ७२,५, १; विध ८७, १; –स्त्रेण अप १, ५०, ४; २१, ६,५××; अशां १, १; १३, ५; विध २३, ४४; –स्त्रेभ्यः विध ३, २४; –स्त्रेषु अप ६४, ७, १०; ७०[२], २३, १३; विध ९९, १०; –स्त्रैः काश्रौ १४,१, २०; अप ५,२,३; १९[२], ३, २; ६८,५,२९.

वस्त्र-कांस्यो( स्य–उ )पजीविन्– -वी वैध ३,१४,१.

वस्त्र-क्षय[e]– -ये अशां १७,५.

वस्त्र-गन्ध-पुष्प-धूप-दीप-माल्य– -ल्यैः बौगृ २,११,२३.

वस्त्र-गन्ध-पुष्प-माल्य– -ल्यैः बौपि २,९,१५.

वस्त्र-गन्धा(न्ध-आ)भरणा( ण– आ)दि– -दीनि वैगृ ३,२ : ९.

वस्त्र-छ(न्न>)न्ना– -न्ना अप ९, २,२.

वस्त्र-तण्डुला( ल-अ )पूप– -पानि वैगृ ३,२१ : १५:१६.

वस्त्र-तोय– -येन वैगृ ५, ६ : १९.

वस्त्र-दशा[f]– -शानाम् गोगृ ४, ९,८; द्रागृ ४,३,१४.

वस्त्र-दान– -नम् शंध ४४६.

वस्त्र-निर्णेजक[g]– -कः वैध ३, १५,९.

वस्त्र-निष्पीड-तोय– -येन अप ४२,२,९.

वस्त्र-निष्पीडन– -नेन अप ४२, २,६.

वस्त्र-पूत– -तम् विध ९६, १५; वैध ३,७,९.

†वस्त्र-मथि[0]– -थिम् या ४, २४ф.

वस्त्र-मांसा(स-अ)म्भस्– -म्भसाम् अप ६४,३,८.

वस्त्र-माथिन्– -थिनम् या ४, २४.

वस्त्र-माल्यो( ल्य-उ )पानच्-छत्र– -त्राणि वैध ३,२,५.

वस्त्र-युग[h]– -गम् आगृ ३,८,१; कौगृ ३,१,१२; शांगृ ३,१, १८; अप १, ५०, १; अशां १३, ३; विध ८६, १७; –गानि बौगृ १, २,७; ६१.

वस्त्र-युगल– -लेन शंध ६७.

वस्त्र-युग्म– -ग्मम् शांगृ ५, २, ८; आग्निगृ ३, ३, २ : १८, अप १६,१,१६.

वस्त्र-विदल-रज्जु-चर्मन्– -र्मणाम् सुधप ८७ : १२.

?वस्त्र-विदल-रज्जु-विदल-चर्मन्[i]– -र्मणाम् सुध २८.

---

*a*) °नाः इति पाठः? यनि. शोधः (तु. तै १,८,१२,१)। *b*) °नाः इति पाठः? यनि. शोधः (तु. शौ ३, १२,५)। *c*) वैप १ द्र.। *d*) = सपा. तैआ ६,१,१। शौ १८,२,५७ कौसू ८०,१७ तु वासः इति पाभे.। *e*) उप. <√क्षि [क्षये]। *f*) उप. = प्रान्त-। *g*) नाप.। उस. उप. कर्तरि <निर् √णिज्। *h*) उप. = युग्म-। *i*) द्वस.। रज्जु- इत्यतः परः विदल-शब्दोऽपपाठः (तु. सुधप ८७ : १२ मनुः ५,११९ विध २३,१४)।

वस्त्र-शयना(न-अ)ग्नि-ज्वलन[a]- -ने अशां १७,१.
वस्त्र-सांपदी[b]- -दी कौसू २१, १२.
वस्त्र-हिरण्य-धान्य-ब्रह्मन्- -ह्मसु गौध १३,२१.
वस्त्रा(स्त्र-आ)दि- -दिना वैगृ ३,२:११; २३:१३.
वस्त्रा(स्त्र-आ)द्य- -द्यैः वैगृ ४, ३:९; १०:२०.
वस्त्रा(स्त्र-अ)न्त- -न्तम् माश्रौ २, १, ४, १८; शांगृ ६, ५, ५.
वस्त्रा(स्त्र-अ)न्तर- -रम् अप १, ५०,१.
वस्त्रा(स्त्र-आ)स्तरण-कर्मन्- -र्म जैश्रौका १६२.
वस्त्रा(स्त्र-अ)पहारक- -कः विध ४५,१३.
वस्त्रा(स्त्र-अ)पहारिन्- -री शंध ३७६; ३७७:६.
वस्त्रा(स्त्र-आ)भरण- -णैः वैगृ ४,१२:५.
वस्त्रा(स्त्र-अ)लंकारा(र-आ)दि- -दिभिः अप ४,२,४.
वस्त्रा(स्त्र-अ)वकुण्ठन- -नम् वैगृ २,१३:४.
वस्त्रा(वस्त्र-अ)वकृत्त[c]- -त्तम् काश्रौ २५,८,३[d].
√वस्त्रि पा ३,१,२१.
वस्त्रो(स्त्र-उ)त्तरीय-पुष्पा(ष्प-आ)द्य- -द्यैः वैश्रौ १,४:१४.
वस्त्रो(स्त्र-उ)त्तरी(य>)या[e]- -याम् विध ९२,८.
वस्त्रो(स्त्र-उ)त्तरीया (य-आ)दि- -दि वैगृ ५,१३:१७.
वस्त्रो (स्त्र-उ)त्तरीया (य-आ) भरण- -णानि वैध ३,१०,५.
वस्त्रो(स्त्र-उ)त्तरीया (य-आ) भरण-पाद्या (द्य-आ)चमन-पुष्प-गन्ध-धूप-दीपा(प-अ)क्षता(त-आ)चमन- -नैः वैध ३,९,५.
वस्त्रो(स्त्र-उ)पानह्-माल्यो (ल्य-उ)पवीत- -तानि विध ७१,४७.
†वस्वस्[f]- -स्वः[g] आपश्रौ १६,११, १२; हिश्रौ ११,४,१२.
वास[h]->वासो(स-उ)दक- -कम् वैगृ ७,६:५; गौपि १,४,७;१३.
वासस्[h]- पाउ ४, २१८; -सः आश्रौ २,७, ६[2];†; ९,४, १७; शांश्रौ ४,५,२†××; काश्रौ; भागृ २, ३०:१५†[i]××; -ससः आश्रौ ६, १०, ६; काश्रौ ७, ३, २२; आपश्रौ १, १०, १; २, ५, ४××; बौश्रौ; -?ससम्[j] काश्रौसं २९:१८; -ससा आश्रौ ८, १४, १०; काश्रौ ८, ६, ३५; आपश्रौ; आग्निगृ १, १, २: २९†[k]; ५,१:२१†[k]; बौगृ २, ५, १२†[k]; भागृ १,५:१४†[k]; १३:४†[k]; हिगृ १,४, २†[k]; गोगृ २, १, १८†[k]; -ससाम् शांश्रौ १५, ३, १३; बौश्रौ २१, ७:१६; जैश्रौका १८४; बौगृ; -ससि आपश्रौ १४, १२, ४; १९, १, १; ५, ७; २०, ११; २१,५,५; हिश्रौ; -ससी आश्रौ २, ५, १०†; काश्रौ ५,५, ३२; १५, ८, २३; आपश्रौ ८, ८, १७; १३, २०, १४; बौश्रौ; -सांसि काश्रौ १५, ७, ३३; २२, ४, २२; आपश्रौ १, १०, १†; १८, ३,४; १६, ९; बौश्रौ २, ७:२४; १०:३७?[l]; ५, १५:२१××; भाश्रौ; -सोभिः आपश्रौ १८, १, १२; बौश्रौ ११, २:१५; वैश्रौ १७, ८:१?[m]; हिश्रौ १३,१,९; कागृ ५७,२; अप ११,१,१५; बौध.
वास-उरो-बाहु- -हुषु काश्रौ ९,४,३५.
वासः-पल्पूलन[n]- -नम् बौध २, ५,८.
वासः-प्रक्लृप्ति[o]- -प्तिः मीसू १०,६,७८.
वासः-प्रबद्ध- -द्धम् काश्रौ १०, २,४.
वासश्-छत्रो(त्र-उ)पानह्- -नहः पागृ २,६,३२.
वासः-शत- -तम् काश्रौ २०,१, २४.
वासो-द[p]- -दः विध ९२,१२.
वासो-दक्षि(ण>)णा[q]- -णाः बौश्रौ १३,१:१७;२४,२९:९.

*a*) द्वस.>सस.>षस. । *b*) षस. उप. सं-पद्-(प्रयोजनार्थे अणि) >सांपद- > स्त्री. यनि. । *c*) उप. = खण्ड- । *d*) °कृतम् इति चौसं.? । *e*) बस. । *f*) वैप २, ३खं. द्र. । *g*) = सपा. तैब्रा २,४,५,५ । ऋ ४, १३, ४ तु वुस्म इति पाभे. । *h*) = वस्त्र- । *i*) सपा. शौ ६, १२४,२ वाससः इति पाभे. । *j*) पाठः? चमसम् इति प्रकरणतः शोधः? । *k*) पाभे. वैप १ वुर्चसा शौ २,१३,२ टि. द्र. । *l*) वसां° इति पाठः? यनि. शोधः (तु. बौश्रौ ५, १५:२१) । *m*) व° इति पाठः? यनि. शोधः (तु. आपश्रौ. प्रभृ.) । *n*) पृ १५४७ सस्थ. पल्पूलनम् इति नेष्टम् । *o*) °कृतिः इति जीसं. प्रयासं.? । *p*) उप. <√दा (दाने) । *q*) बस. उप. = २दक्षिणा- ।

वासो-दशा[a]- -शायाम् वैश्रौ १२,९ : ५.

वासो-दान- -नम् हिश्रौ ५, ४, ८८.

वासो(सस्-अ)धिवासस- -ससोः बृदे ४,३०.

वासो(सस्-अ)पासन[b]- -नम् काश्रौ १९,५,१६.

वासो-भार[c]- -रान् बौश्रौ ११, १ : ८; ६ : २७; १२, ७ : ३८.

वासो-यज्ञोपवीत- -ते शंध २१२; ३४४.

वासो-युग[d]- -गम् अप्राय ६,२; अप ७०, ३, ४; विध ९०, ४; -गेन विध ८७,४;६.

वासोयुगा(ग-आ)च्छादि(त>)ता- -ताम् विध९०,१३.

वासो-वत् बौध १,६,१२.

वासो-वत्स[e]- -त्सम् मीसू १०, ३,३४.

वासो-वाय[i]- -यः ऋप्रा २,४१†.

वासो-हिरण्य- -ण्ये काश्रौ १०, २,८.

वासो-हिरण्य-रुक्म[g]- -क्मे वाश्रौ ३,४,४,९.

२वास्य[i]- -स्यम् शुअ ४,१२२†.

√वस् (गन्धे)>३वास[h]->वास-प्रभृति- -तयः अप ३३,१,७.

वासा(स-आ)दि- -दीन् अप ३३,५,८.

√वस् (दीप्तौ) > १*वस्[i]- >

१वसिष्ठ[i]- -ष्ठः बौश्रौ ३, ११ : १६; १४,१७ : ९; माश्रौ १, ९, १०; वाश्रौ १, २, ३,२९; हिश्रौ २१, १, १; भागृ २, १३ : १०; -ष्ठाः बौश्रौ ३,११ : १५; वाश्रौ १, २,३,२९.

वसीयस्[i]- -†यः काश्रौ १०, ३,२२[j]; आपश्रौ १३, २१, ३[j]; बौश्रौ[j] ८,११ : २;१४,५ : १६; माश्रौ २, ५,४, ३७[j]; हिश्रौ ९, ५, ४२[j]; जैगृ; -यसः लाश्रौ ५, ३,५†[k]; -यांसः आपश्रौ २३, ८, ११; हिश्रौ १८, १, २५; २९; ३, २; ४; १७; ४, १८; -यांसम् तैप्रा १६,१३†; -यान् शांश्रौ ४, १२, ९†; आपश्रौ २, १७, ५[2]; ४, १५, ५†; ५,३,११××; बौश्रौ.

†वसीयसी[i]- -०सि आपश्रौ ४,१०,४; माश्रौ १, ४, २,१; वाश्रौ; -सी अशां १८, १; गोगृ १,६,३$.

†वस्यस्[i]- -स्यः आश्रौ ३, ७, ६[l]; आपश्रौ ३, २०,१०; बौश्रौ ३, ३० : २०; भाश्रौ; माश्रौ २, ५, ४, १७[l]; -स्यसः बौश्रौ ५, १६ : १५[k]; द्राश्रौ १३, २, १३; बौगृ २, ६,१०.

वस्यसी- -सीऽ-सी आग्निगृ ३,६,४:१७; २०; वौपि १,१३ : १६; १८.

†वस्य-इष्टि[i]- -ष्टये शांश्रौ ११, ११, १७; १८, १८, ५.

†वस्यष्टि[i]- -ष्टये[m] द्राश्रौ १५, ३,८; लाश्रौ ५, ११, ८; -ष्टिः[n] बौश्रौ १४,२० : १२; द्राश्रौ १५, ३,८; लाश्रौ; -ष्टिम् द्राश्रौ १५, ३,८; लाश्रौ ५, ११,८; वैताश्रौ २६,१४;-ष्ट्यै[m] वैताश्रौ २६,१४

वस्यो-भूय[i]- -याय अप ४६, ४,१[४];६,५.

वस्योभूयाया(य-अ)न्त[o]- -न्तान् अअ ८,१०.

√वस् पाधा. दिवा.[p] पर. स्तम्भे; चुरा. उभ. स्नेहच्छेदापहरणेषु.

२वस्[q]-(>४वास-पा.)पाग ५,४,३८

वसत्-,वसति,ती-प्रभृ. √वस्(वधा.)द्र

वसन- प्रभृ. √वस्(आच्छादने) द्र.

वसन्त[i]- पाउ ३,१२८; पाग २, ४, ३१; ४, २, ६३[r]; -न्तः काश्रौ ४, ७, ५; †आपश्रौ ५, ३,१८; ८,४,१३; १४, २८, ४; बौश्रौ; -†न्तम् आपश्रौ ४, ९,७; बौश्रौ ३, १८ : ७; भाश्रौ ४, १३, २; माश्रौ १, ४, १, २६; वाश्रौ १, १, ३, १; वैश्रौ ६, ७ : ३; हिश्रौ ६, ३, २; -न्तस्य बौश्रौ १८, ५२ : ५; माश्रौ १, ४, १, २७†; वाश्रौ १, १, ३, १†; -न्ता माश्रौ ५, १, ५, ७२; वाधूश्रौ ४,४० : ३; वाश्रौ १,५, ३, १७; -†न्तान् या १४, ३४;

a) उप. =१दश, शा-। b) उप. < अपा(प√अ)स (क्षेपणे)। c) उप. = मान-विशेष-। d) उप. = युग्म-। e) समाहारे द्वस. (तु. शाबरभाष्यं केवलानन्दश्च; वैतु. व्यस्तः पाठः इति जीसं. प्रयासं.)। f) वैप १ द्र.। g) समाहारे द्वस. उप. = हिरण्य-कशिपु- (तु. सप्र. काश्रौ २०, ६,१० आपश्रौ २०,१७,८ प्रभृ.)। h) = सुगन्धि-। i) पाभे. वैप१ वसीयः तै ३,१,९,२ टि. द्र.। j) पाभे. वैप १ वसीयः मै १,३,२९ टि. द्र.। k) सपा. वसीयसः<>वस्यसः (मा ३,५८ च) इति पाभे.। l) पाभे. वैप १ वस्यः ऋ ६,६१,१४ टि. द्र.। m) सपा. °ष्टये<>°ष्ट्यै इति पाभे.। n) पाभे. वैप १ वस्यष्टिः टि. द्र.। o) विप. (पर्याय-मन्त्र-)। बस.। p) √बस् इति केचित् (तु. पामाधा.)। q) पृ २१६९ f द्र.। r) =⌊वसन्त-सहचरित-⌋ ग्रन्थ-विशेष-।

ऋप्रा ८, ४७; -न्ताय आपश्रौ २०, १४, ५; २०, ६†; †वाश्रौ ३,४, ३, २१; २२; हिश्रौ १४, ४,४६†; -न्ते आश्रौ २,१,१२; शांश्रौ २, १, १; १६, ९, २७; काश्रौ ७, १,५; आपश्रौ; -न्तेऽन्ते आपश्रौ १०,२,५; वैश्रौ १२, ३ : १; हिश्रौ ७, १,४; -†न्तेन काश्रौ १९,७,२१; शुअ २,४५८.

वासन्त[a]- पा ४,३,४६; -†न्ताः आपश्रौ २०,२३,१०;११; बौश्रौ १५, ३८ : ११; हिश्रौ १४, ५, १७; -न्ताय हिश्रौ १४,२,३५; -न्तौ अअ १५,४².

†वासन्ती- -न्ती बौश्रौ १०, ३५ : ५; १४,२२ : १०.

वासन्तक- पा ४,३,४६.

वासन्तिक,का[a]- पा ४, २,६३; ३,२०; -कः आश्रौ ४, १२, १; -काः[b] वाधूश्रौ ४, २९ : ५; -कानि बौगृ २, १०, २; -काय शांश्रौ ९, २७, १; -कैः बौगृ २, १० : २; -†कौ बौश्रौ २,१६ : १७; वैश्रौ.

वासन्तिकी- -की नाशि २, ८,२.

वसन्त-ग्रीष्म[c]- पाग २,२,३१.

वसन्त-रविमण्डल-तुल्य—बिम्ब- -म्बः अप २४,६,३.

वसन्त-शरद्- -रदौ बृदे १, ११५.

वसन्ता(न्त-आ)दि- -दि काश्रौ २०, ८,३०; -दिषु वैश्रौ १७,७ : २; वैताश्रौ ११, ४; -दौ बौगृ २, १०,२.

?वसर्पति[d] आपश्रौ १०,२८,३.

**वसवान-**, वसव्य- १वसु- द्र.

**वसा**(वप्रा.)[a]- पाग ३,३,१०४; -सया वाश्रौ ३, २, ७, २९; -सा अप ४८, १०२†[e]; शुअ १, ४०३; विध २२,८१; ९६, ९१; -सानाम् मीसू ११, ४ ३४; -साभिः वाश्रौ ३, १, १, ९; -साम् काश्रौ ६, ८, ११; बौश्रौ ४,९ : २४†; वाश्रौ १,६,७,१५; ३,२, ८, १४; वैश्रौ १०, १९ : ९; पागृ ३,८,६; गोगृ.

वसा-ग्रह- -हम् काश्रौ १९,४, २४; -हान् काश्रौ १९,४,१२.

वसा(सा-अ)तिशेष- -षेण द्राश्रौ १३,४,९; लाश्रौ ५,४,१६.

वसा-पात्र- -त्रान् बौश्रौ १८,४० : १६; -त्रैः बौश्रौ १८,४० : २४; २५.

†वसा-पावन्[a]- -०वानः बौश्रौ ४, ९ : २४.

वसा-मेदो(द-उ)द्भव- -वम् शंध २४२.

वसा-रुधिर-मांस-मेदो(दस्-अ)स्थि-मज्जा-शुक्रा(क्र-आ)त्मक- -कम् विध ९६,४४.

वसा-लोहित-मांस- -सानाम् अप ७०,५,५.

वसा-शेष- -षेण काश्रौ ६, ८, २०.

वसा-शोणित-गन्ध[f]—त्व- -त्वम् अप ६४,६,१.

वसा-संदेह- -हात् काश्रौ ८,८, ३२.

वसा-हव(न>)नी[g]- -न्या वैश्रौ १०, २० : १५; -न्याम् वैश्रौ १०,१८ : १२; १९ : ८.

वसा-होम- -मः बौश्रौ १५, ३६ : १७; १६, ११ : ३; वाधूश्रौ ४, ६५³ : ३; मीसू ११,२,२३; -मम् आपश्रौ ७, २५, १; ४; १०; बौश्रौ ४,८ : ३०; ९ : १२; १७; २३²××; भाश्रौ; -माः बौश्रौ १०, ५९ : ६; ११, १३ : ८; १५, १८ : २०; १७, २ : ३; माश्रौ ५, २, १२, ३; -मात् शांश्रौ ५, १९, १६; -मे आश्रौ ३, ६, ८; बौश्रौ २३,६ : १३; -मौ बौश्रौ १२,१६ : २०; १८ : २३.

वसाहोम-शेष- -षेण माश्रौ १, ८,५,२९; मागृ २,४,१०.

वसाहोम-हव(न>)नी[g]- -नी वाश्रौ १, ६, २, ११; -नीम् आपश्रौ ७,८,३;७; भाश्रौ ७,६, ६; हिश्रौ ४,२,२७; -न्या हिश्रौ ४,५, ३७; -न्याम् काश्रौ ६,८, ८; आपश्रौ ७,२३,११; २५,१; बौश्रौ २५,३२ : १४; १६; ३०; भाश्रौ ७, १८,१०; माश्रौ.

वसाहोमो(म-उ)च्छेष- -षेण वैश्रौ १०,१९ : १६.

वसाहोमो(म-उ)द्रेक- -केण बौश्रौ ४,९ : २६; भाश्रौ ७,२०, ७; हिश्रौ ४, ५, २३; ५, १, ३९.

वसै(सा-ए)कदेश- -शम् काश्रौ ६, ८,१६.

१?**वसाति**[h]- -तिषु या १२,२†.

वासात्य- -त्यः या १२,२†.

२**वसाति**[i]-(>वासातक- पा.) पाग ४,२,५३.

**१वसान-** √वस् (आच्छादने) द्र.

---

a) वैप १ द्र.। b) विप. (मधु-कृत्-)। c) तु. पागम.। d) पाठः? । सप्र. वैश्रौ १२,२० : ४ उपसर्पति इति। e) =वाच्-। f) द्वस. > बस.। g) =पात्र-विशेष-। h) स्क. दु. =रात्रि- इति, = जनपद- इति,[पक्षे] तु. PW. प्रमृ. =उषस्- इति?। i) गणे पाठाऽनङ्गीकाराद् वासात- इत्यन्यः इति पागम.।

सकारो(र-उ)द्वय[a]- -ययोः ऋप्रा ४,१७.

सकारो(र-उ)व्यञ्जन- -नः ऋप्रा ११,९.

सकारो(र-उ)पनिभ[b]- -भान् ऋप्रा १४,२९.

सकारो(र-उ)पसृष्ट- -ष्टम् निसू २,९:७; ९.

सकारो(र-ऊ)र्ध्व- -र्ध्वः भाशि ८३.

स-क्र-घकार-पर- -रे तैप्रा ८,२६.

स-ग्रहण- -णम् पावा ८,२,२३.

स-थ-न- -नाः अप्रा ३, २,१०.

स-भाव- -वः पावा ५,३,२२.

स-लोप- -पः पा ३, १, ११; ७, २,७९; पावा ३,१, ११; ७, ३, ११९; -पे पावा १,१,५८.

स-श- -शौ शैशि २२१.

स-ष-कार—पर- -रः तैप्रा ५,३२.

स-सजुस्- -जुषोः पा ८,२,६६.

१सा(स-अ)न्त[a]->°न्त-ग्रहणा(ण-आ)नर्थक्य- -क्यम् पावा ८,३, ८५.

सान्त-महत्- -हतः पा ६, ४, १०; पावा ६,१,१३.

३स[c]-

४स[d]- सः पा ६,३,७८.

सं√यच्छ्,यम्[e], संयच्छति आपश्रौ १, ३, १२; संयच्छेत् वैश्रौ १, ६:१६.

संयमः अश्र ४,३†.

संयम्यते या १४,६.

सं-यत- -तः शंध ४४८; कौशि २२; -तम् अश्र १०,४†.

संयत-रश्मि[a]- -श्मिः या ५, ८.

संयत-वाच्[a]- -वाक् वाध ७, ७.

संयते(त-इ)न्द्रिय[a]- -यः अप ६८,३,६; वैध २,८,७.

सं-यम- पा ३,३,६३.

सं-यमन->°न-कर्मन्- -र्मा या १०,९.

संयमनी[f]- -नीम् अप ४,३,५.

सं-यम्य वैश्रौ ९, ३:६; आग्निगृ; हिगृ २, ६,१२[g].

सं-याम- पा ३,३,६३.

सं√यज्, संयजन्ते या १३, १३†; †संयजामि[h] आपश्रौ ३, १०,१; बौश्रौ १, २०:२०; भाश्रौ ३, ९,६; वाश्रौ १,३,७,१४; हिश्रौ २, ५, २९; सम्···यजस्व बौश्रौ ७,६:२२†; संयजेयाताम् शांश्रौ १४,२९,२; ३९,७.

संयाजयति भाश्रौ ७,२२,८; ८, १०, ३; माश्रौ; संयाजयन्ति आपश्रौ ३, ८, ६; ८; १०××; बौश्रौ ४, १०:१५; भाश्रौ; संयाजयेत् आपश्रौ १०, २१, १४; १५; बौश्रौ २०, १५:२; ३; ३१:४.

सं-याजन- -नात् माश्रौ २,४,४,२७; -ने बौश्रौ २०, १५:१; ३१:३.

सं-याजयत्- -यन् आपश्रौ ९, १४, ३; वैश्रौ २०,२९:१०; हिश्रौ.

सं-याजयिष्यत्- -ष्यन् भाश्रौ ९, १६, ९; -ष्यन्तः आपश्रौ ३, ८,२; भाश्रौ ३,७, २; वैश्रौ.

सं-याज्य बौश्रौ ५,९:१२××.

सं-या(ज्य>)ज्या[f,i]- -ज्ये आश्रौ २,१,२१;२६;३०××; काश्रौ.

सम्-इष्ट- >°ष्ट-यजुस्[f]- -जुः शांश्रौ ४,११,२; काश्रौ ३,९,४; आपश्रौ; -जुर्भ्यः माश्रौ १,७, ४, ३२; ८, ६, १७××; वैताश्रौ २३. १९; -जुषः काश्रौ ७,२,२५; २५, ५,१६; आपश्रौ; -जुषा शांश्रौ ४,१३,४; आपश्रौ ३, १३, ४; भाश्रौ; -जुषाम् बौश्रौ २०, ३१:१६; वाधूश्रौ ४, ८५:१४; -जुषि बौश्रौ ३, २६:१०; भाश्रौ४,१९,८; माश्रौ; -जुषी माश्रौ १, ७,२,२०; वैश्रौ १९,७:८;-जुःषु शांश्रौ ८,९,९; हिश्रौ १०,५,१९; -जूंषि शांश्रौ १८,२४,११; काश्रौ ५, २, ९; ५,२७××; आपश्रौ.

१समिष्टयजुर्-अन्त- -न्ते काश्रौ २२,६,९; २५,१०,१८.

२समिष्टयजुर्-अन्त[a]- -न्तम् काश्रौ ५,६,४

समिष्टयजुर्-वर्जम् काश्रौ ७,२, २६.

समिष्टयजुर्-हुत- -तम् आपश्रौ ४,१३,८.

सम्-इष्टि[f]- -ष्ट्यै बौश्रौ २७, २: १९†.

सं√यत्, संयतते या ७,२२; २३[2]; सम् (यतते) ऋअ २, ५, ३७; सं···यतन्ते या ४, १३†[j]; संयतध्वम् आपश्रौ ६,८,११†; समयतन्त शांश्रौ १४, २३, १; ३२,१; ३८,१.

---

*a*) बस.। *b*) उप. = सदृश-। *c*) वैप ३,८५२ p द्र.। *d*) <सह। *e*) पा १, ३, ५५; ७५ परामृष्टः द्र.। *f*) वैप १ द्र.। *g*) सपा. आग्निगृ २, २, ५ : १७ संन्यस्य इति पाभे.। *h*) पाभे. वैप १ संजुहोमि का २,५,३ टि. द्र.। *i*) = ⌊सौविष्टकृती⌋ याज्यानुवाक्या- इति भाष्यम्। *j*) सपा. ऋ ३, ८,९ यतानाः इति पाभे.।

संयेतिरे बौश्रौ १८, ४६ : १; ४९ : १.

सं-यत्त- -त्तः बौश्रौ १६: १४,१२; वाधूश्रौ ४, ४३:१;६३ : १;८०: १; आग्निगृ; २, ५, ५ : ८; –त्ते आपश्रौ १४, १४, ५; १७,१४, ८; २२, १२,११; बौश्रौ १४, १८ : २; वैश्रौ २०, ७ : ८; हिश्रौ १०,७,६.

सं-यत्य माश्रौ ५,१,५,१४.

†१सं-यत्[a]- -यत् आपश्रौ १७,७,७; २४,९; बौश्रौ; निघ २,१७[b]; –यतः आश्रौ ६,२, ६; शांश्रौ ९,६,६; बौश्रौ १०, ३५ : १३; माश्रौ.

२सं-यत्- सम् √इ द्र.

सं-यत- प्रभृ. सं√यच्छ् द्र.

संयद्वर- पाउभो २,३,७४.

संयद्-वसु- सम् √इ द्र.

सं-यम- प्रभृ. सं√यच्छ् द्र.

सं√यस्[c], सम्···ययस्तु या ६, ११†.

सं√या, समयात् सु १८,१; समयाव आपमं १,३,१४†.

सं-यान- -नम् आग्निगृ २, ४,७ : ८; –नस्य बौश्रौ १४, १ : २३; [a]–ने वाध १९,१७.

संयानी[a]- -नीः बौश्रौ १९,१० : ३०; –नीम् बौश्रौ १०,३८ : २; ५; १३; १६; –नीषु जैश्रौप ५; –न्यः माश्रौ ६,१,८, ९; –न्यौ आपश्रौ १६,२४, ८; १७,१, ६; १८××; बौश्रौ; माश्रौ ६,२,.२, १०?[d]; हिश्रौ १२, १,४?[e];११.

सं-याजन- प्रभृ. सं√यज् द्र.

स-याम- सं√यच्छ् द्र.

सं√यु,यू, संयौति काश्रौ २, ५,१४: १६,३,१९; आपश्रौ; †संयौमि आपश्रौ १,२४,५; बौश्रौ १,९ : १०; भाश्रौ; संयौयात् बौश्रौ १६, ४ : ९; २४,३६ : १५.

संसम्···युवसे बौश्रौ १३, ३५ : १८†; †संसम् (युवसे) माश्रौ ५, १, ५, २१; ६, २, २, २१; वैताश्रौ.

समयावीत् वाधूश्रौ ४, १०८ : २९.

सं-यवन- -नम् मीसू १०, १,५१; –ने बौश्रौ २०,८ : २९.

संयवन-मन्त्र- -न्त्रेण हिश्रौ ८, १,५६.

संयवना( न-अर्थ> )र्था- –र्थानाम् मीसू ४,२,१५.

सं-याव- पा ३, ३, २३; –वेन[f] आग्निगृ २,१, १ : १३; हिगृ २, २,६.

सं-युत्- पाग ६,१,१५६.

सं-युत,ता- -तः अप २२, १, ५; शैशि ७१; २६१; याशि; –तम् आपश्रौ ६, ३०, २०†××; बौश्रौ; वाध २६, १८; शैशि ८५;३३८; पाशि १६; माशि ७, ४; याशि २,५७;८७-९०; नाशि २, १, ६; –ता माशि ४, १५; –ताः शैशि ६७; माशि ११, ५; याशि २,९६; –तात् वैश्रौ १७, १६ : १; –तान् नाशि २,२,९; –तानाम् भाश्रौ ८,१,२३; हिश्रौ ५, १, १७; –तानि बौश्रौ २६, ११ : १५; –ते नाशि २, २, ११; –तेषु वैश्रौ ८,४ : ८; –तौ शैशि ८४; ११९.

सं-युत्य आपश्रौ १, २४, ५; ८, १३,१८;१९,२६,१; बौश्रौ.

सं-यूय कागृ ३९, २;७२, २; गोगृ.

सं√युज्, संयुज्यात् निसू ५, ३, २३;२७.

संयुज्यते निसू ३,८ : १२; विध ५४,१; संयुज्यन्ते अप १,७,२; ३; ९, १०; ऋप्रा १२, ३; संयुज्यस्व बृदे ५, ५५; संयुज्येत शांश्रौ १, १, ८; द्राश्रौ १२, १, १३.

संयुनक्ति आपश्रौ ६,२९,८;२४, ११, १०; सम्···युञ्जन्तु, सम् (युञ्जन्तु) वैताश्रौ ३६, २७†; सम्···युञ्जानि वौगृ १,५,२९?[g]; हिगृ १, २४, ४; सम् (युञ्जानि) वौगृ १,५,२९[g]; वैगृ ३,८ : ६; हिगृ; संयुञ्ज्यात् द्राश्रौ ६, १, १६; लाश्रौ २,९,१२.

संयोजयति वैगृ ७,८:८; †संयोजयस्व मागृ १,१९,४; २,१४, ३१; संयोजयेत् आग्निगृ ३,१०, १ : १३; बौपि ३, ५,२; गौपि; बौशु १० : २७.

सं-युक्त,क्ता- -क्तः कागृ १,१३;मागृ १,१,३; वागृ ६,४; अप; –क्तम् बौश्रौ २०, १७ : २४; लाश्रौ; –क्तस्य माशि १०, ११; ११,६; याशि २, २५; नाशि; –क्ता अप २२, ३, २; –क्ताः वाधूश्रौ ४, २६[d]:१९; निसू १०,१० : १०; माशि ११,४; १२,२; याशि २, ३४; –क्तान् वाध २८, १८;

---

*a*) वैप १ द्र. । *b*) =संग्राम- । *c*) पा ३,१,७२ परामृष्टः द्र. । *d*) °न्ये इति पाठः ? यनि. शोधः (तु. आपश्रौ १७,१,१८) । *e*) °न्ये इति पाठः ? यनि. शोधः (तु. उत्तरं स्थलम्) । *f*) नाप. । *g*) °ञ्जति इति पाठः ? यनि. शोधः (तु. हिगृ.) ।

-क्तानि हिश्रौ १, ६, ४०; निसू ६,५ : १९; -क्ताम् अप ६८,५, २९; -क्तासु गौध २८, ४८; -क्ते आश्रौ ३,४, १२; निसू ४, ८ : २३;३८; आग्निगृ २,४,६ : ९; अप; -क्तेषु वैश्रौ ११, ९ : १०; -क्तौ काश्रौ २२,१०,२१; वौश्रौ २५,६ : ९.

संयुक्त-कल्प- -ल्पः कौसू ९२, ३२.

संयुक्त-धर्म- -र्माः निसू ६,५ : १९; ८,७ : १६.

सं-युग[a]- पाग ४, ४, ९९; -गे निघ २,१७‡.

सांयुगीन- पा ४,४,९९.

सं-युज्- -युजे वागृ ८,४‡.

सं-युज्य शांश्रौ १,१६,७; वौश्रौ.

सं-युज्यमान- -ने हिश्रौ ३,८, ४३; ४७.

सं-योग[b]- पाग ५,१, १०१; -गः लाश्रौ १०, ६, १०; ऋप ४७. २, ८; ४८, ११५²‡; ६४, ३, ६; शंध; ऋप्रा १, ३७; १८, ३८; शुप्रा १,४८: पा, पावा १, १,७; -गम् वैध १,११,३; १३; ऋप्रा ६, ३५; १८, ४०; उसू; -गस्य ऋप्रा ५,२६; माशि ११, ६; पा६,४,१०; पावा १,१,५७; मीसू; -गाः कप्र ३,३,८; माशि ११,२; -गात् शांश्रौ १,१,५; काश्रौ २५,८,१८; वौध; -गान् ऋप्रा १७,२३; -गानाम् ऋप्रा १४,५८; -गे अप ६४, ३, ३; ऋप्रा७,३३;शैशि३५;७५; माशि; पा १, ४, ११; पाप्रवा ४, १३; -गेन आपश्रौ १८,११,४; हिश्रौ १३, ४, १६; या ६, ९; -गेषु अप ६८,१,६.

सांयो[,यौ][c]गिक[d]- पा ५, १, १०१; -कानाम् या १,२.

संयोग-तस् (:) शंध ५७; ४५६; मीसू ३,१,७.

संयोग-नायक- -कम् माशि ११, ६; याशि २, २५; नाशि २, २, १४.

संयोग-पर- -रम् माशि ११, १; नाशि २,६,१०.

संयोग-पिण्ड- -ण्डाः याशि २, ८१.

संयोग-पूर्व- -र्वम् तैप्रा २२, १४.

संयोगपूर्व-व्यञ्जनान्ता (न्त-अ)वसानगत- -ताः शुप्रा ४, १०९.

संयोग-पृथक्त्व- -त्वम् मीसू ४, ३, ४; -त्वात् मीसू ६, ६, ३८; १२,१,२३.

संयोग-मन्त्र- -न्त्रः गौध ४,७.

संयोग-रूप-चोदना ( ना-आ ) ख्या( ख्या-अ )विशेष- -षात् मीसू २,४,९.

संयोग-वत् मीसू ३,४,२४.

संयोग-वश-वर्तिन्- -र्तिनाम् माशि ११,८.

संयोग-विशेष- -षात् मीसू ३, ६,१०.

संयोग-संज्ञा- -ज्ञायाम् पावा १,१,७.

१संयोगा( ग-आ )दि[e]- -दयः पा ६,१,३; -दि तैप्रा २१, ४; शौच १, ५६; ३, २८; -दिः ऋप्रा १, २५; ६, १××; शुप्रा; -द्योः पा ८,२,२९.

संयोगादि-लोप- -पः पावा १,१,७; ८,२,६.

संयोगादिलोप-बलीय-स्त्व- -स्त्वात् पावा ६,१,६७.

२संयोगा(ग-आ)दि[f]- -दिः पा ६, ४, १६६; -देः ऋप्रा १४, ३३; पा ६, ४, ६८××; पावा ६,१,७०; ७,४,१०; -दौ अप्रा २,२,७;१२.

संयोगा( ग-२आ )द्य- -द्यः याशि २,४२.

संयोगा( ग-अ )नुस्वार-पर- -राणि ऋप्रा १,२९.

१संयोगा(ग-अ)न्त- -न्ते नाशि २,२,१७.

२संयोगा( ग-अ )न्त[f]- -न्तस्य पा, पावा ८, २,२३.

संयोगान्त-लोप- -पः पावा ६, १, ६७; ८, २, ६; -पस्य पावा ६, १,६७; -पे पावा ८,२, ६;२३.

संयोगान्तलोप-प्रभृति- -तिषु पावा १,१,५८.

संयोगान्ता(न्त-अ)र्थ- -र्थम् पावा ३, २,१०७.

संयोगा( ग-अ )न्तर- -रात् मीसू ३, ४,१३.

संयोगा( ग-अ )र्थ, र्था- -र्थम् पावा ७, ४,९०; -र्थाः बृदे ७, १३६.

संयोगा(ग-अ)वग्रह- -हेषु शैशि २०४; माशि ८, ७; याशि २,

*a*) = संग्राम-। उप. अधिकरणे कः प्र. कुत्वञ्च [पावा ३, ३, ५८ पा ७, ३, ५३ ( वैतु. [पक्षे] दे. बस. इति)]। *b*) भाप., नाप. (संज्ञा- [ऋप्रा. प्रभृ., पा.]) । *c*) तु. लसं. भडकमकरः PW. प्रभृ. । *d*) उभयपदवृद्धिः वैकल्पिकी उसं. (पा ७, ३, २०)। *e*) षस. । *f*) बस. ।

५२; नाशि २,२,१६.

संयोगा(ग-अ)विघात– -तः शौच १,१०४.

संयोगो(ग-उ)त्तर[a]– -रम् माशि १०,११; नाशि २,७,३.

संयोगो(ग-उ)त्पात– -तौ पा ५,१,३८.

संयोगो(ग-उ)प (धा>)ध–ग्रहण– -णम् पावा ७,४,१०.

संयोगो(ग-उ)पधा–संज्ञा– > °ज्ञा(ज्ञा-अ)लोन्त्य-द्विर्वचन-स्था-निवद्भावप्रतिषेध– -धाः पाप्रवा ५,८.

सं-योज्य वैगृ ६,१ : १८; कप्र.

**सं-युत्–** प्रमृ. सं √यु द्र.

**सं √युप्** > सं-योपयत्– -यन्तः मागृ २,१७,१†[b].

**सं-यूय** सं √यु द्र.

**सं-योग–** प्रमृ. सं √युज् द्र.

**सं √रक्ष्**, संरक्षेत् सुधप ८८ : ९.

सं-रक्ष[c,d]–, संरक्ष-सूचक[d]–( > सांरक्ष्य–, सौंरक्षसूचक्य– पा.) पाग ५,१,१२८.

सं-रक्षित– (> °तिन्– पा.) पाग ५,२,८८.

**सं √रञ्ज्** > सं-रक्त– > °क्त-श्याम–कलुष– -षः अप ६३,५,१.

**सं √रभ्, म्भ्**, संरभन्ते कौसू ७६, २९; †संरभन्ताम् आपश्रौ ५, ११,६[e]; -१३, २२,१[f]; बौश्रौ २, १६ : ३७[e]; वाश्रौ १, ४,२,१६[e]; हिश्रौ ३, ३,४७[e]; †संरभध्वम् हिश्रौ ९, ५, ४३[f,g]; आगृ १, ८, २; ४, ६, १३; आग्निगृ ३, ६, १ : २४; कागृ; गौपि २, ६, २२; संरभावहै भागृ १, ७ : १४†.

सं-रब्ध– -†ब्धाः माश्रौ २, ५,४, २४; द्राश्रौ ३,३, १३; लाश्रौ १०,९,५.

सं-रभ्य बौश्रौ २५, १० : ८; ऋप.

सं-रम्भण[h]– -णानि कौसू १४,२६.

**सं √रा** > †सं-रराण– -णः शांश्रौ ९, ५,१[i]; आपश्रौ १२,६,३; माश्रौ १,८,३,३[j]; हिश्रौ; आपमं १, ११, ४[j]; बौगृ १, ९, ३[j]; -णाः बौश्रौ १०,४८ : ३०.

**सं √राज्** > सं-राज्– -†राट् शांश्रौ ८, १७,३; ९,६,२१[k]; -राजम् बौगृ ३,४,९.

सं-राज[l]– -जन् भागृ २, २१ : २०†[l].

सांरा(ज[m]>)जी– -ज्यै वैगृ २, ११ : २[n].

सं-राजन्– -ज्ञे बौगृ ३,४,३[n].

संराज्ञी– -ज्ञी कौगृ १,८,१४†[o].

**सं √राध्**, संराधयन्ति वैश्रौ १३, १० : १०; हिश्रौ २४,३,४†; संराधयेयुः आपश्रौ १०,२०,२.

†सं-राध(न>)नी[p]– -नी भागृ १, ५ : ३; -नीम्[q] आश्रौ ८, १४, ४; आपमं २,८,५; भागृ १,५ : ४; हिगृ १,२,१९; -न्यै[r] आपमं २,८,६; आग्निगृ १,१,१ : ५३[r]; ५, १ : ४०; भागृ.

सं-राधयत्– -यन्तः आपश्रौ १३, १, ९; १५,८,१०; माश्रौ ११, ८,१४; वैश्रौ.

†सं-रा(ध>)धा[p,s]– -धाम्[q], -धायै जैगृ १,२० : २१[r].

†सं-राधि(न्>)नी[p]– -नीम् बौगृ १, ३, ३८[q]; -न्यै बौगृ १, ३, ३९[r].

**सं √रि**, समरिण्वन् वाश्रौ १, ६, ७, ८†[t].

सम्…रिणन्ति[u] काश्रौ २२, ६,११; लाश्रौ ८,८,११; सम्…रिणीथः ऋप्राय ६,९; समरिणन्[t] बौश्रौ ४, ९ : १८; वैश्रौ १०, १९ : १०; हिश्रौ ४,५,१७.

**सं √रिह्** > सं-रिहा(ण>)णा– -णे या ९,३९†.

**सं √रुध्**, †संरुणद्धि आपश्रौ २१, २२, ५; हिश्रौ १६, ७, १७; संरुन्धन्ति या ६,१६; संरुन्ध्यात् आपश्रौ २१,२२,५; हिश्रौ १६, ७,१७.

---

*a*) वस. । *b*) पाभे. वैप १ संयोपयन्तः टि. द्र. । *c*) नाप. । गस. । *d*) संरक्ष–, सूचक– > संरक्षसूचक– इति [पक्षे] भाण्डा. पासि. । *e*) सपा. ऋ ३,२९,१३ संरभन्ते इति पाभे. । *f*) सपा. संरभन्ताम् (काठ ४,१३ च) <> संरभध्वम् (मै १,३,३९ च) इति पाभे. । *g*) पृ २०२ अनुसं° इत्यत्र अनु (कप्र.), यनि. चेति शोधः । *h*) = सूक्त-विशेष- (शौ ४,३०-३१) । *i*) पाभे. वैप १ संरराणः मा ८, ३६ टि. द्र. । *j*) सपा. मागृ १,१४,१६ संविदानः इति पाभे. । *k*) सपा. मा ८, ३७ सम्राट् इति पाभे. । *l*) व्यु. पाभे. च सम् राज– > -जन् टि. द्र. । *m*) स्वार्थिकः अण् प्र. । *n*) परस्परं पाभे. । *o*) सपा. ऋ १०, ८५, ४६ प्रमृ. सम्राज्ञी इति पाभे. । *p*) = देवी-विशेष- । *q*) पाभे. वैप २, ३खं. सुराधनीम् माश १४,९,३,३ टि. द्र. । *r*) परस्परं पाभे. । *s*) उप. कर्तरि अच् प्र. । *t*) सपा. °रिण्वन् (मै १,२,१७ च) <> °रिणन् (माश ३, ८,३,२० च) इति पाभे. । *u*) सपा. वैताश्रौ ३०,१७ सम्…ऋणन्ति इति पाभे. ।

†संरुध्येरन्[a] आपश्रौ २१, २२, ५; हिश्रौ १६,७,१७.
सं-रुद्ध- > °द्ध-प्रजनन[b]- -नस्य या ५,२.
सं-रोध- -धः लाश्रौ १०, ७, ११; -धात् निसू ४,१ : ३१; ८, ४ : ८; -धे निसू ४,७ : १०.
सं√रुह्, सम्···रोहति बौश्रौ ९, ४ : २४; १७ : ११; १०,८ : ७. संरोपयिष्यति बौश्रौ १७,४५ : ६.
सं-रोह- -हः[c],-हम्, -हाय वैताश्रौ २६,११.
†सं-रोहयत्- -यन्तः आपश्रौ ४,६, १; माश्रौ ४,७,४; हिश्रौ६,२,९.
सं√रूपि(<रूप-)>सं-रूपि(त>)ता- -ता निसू ६,२ : ६.
सं√लक्ष्,संलक्ष्यन्ते बृदे १,९५.
सं-लक्षण[d]- -णाय भागृ १,११ : ६.
सं√लग् > सं-ल(ग्न>)ग्ना- -ग्नाः कप्र १,६,१०.
संलग्न-वाच्[b]- -वाक् शंध ३७७ : ९.
सं√लङ्घ्>सं-लङ्घित,ता- -तः निसू ८, २ : ८; १४; -तायाम् लाश्रौ ६,६,१५.
सं√लप्>सं-लपित- -ताः शंध २५१.
सं-लाप- -पः बृदे १,३६; ५२.
सं√लिख्,संलेखयेत् बौश्रौ २४,१८ : ९.
सं-लिख्य द्राश्रौ ११,१, १०; लाश्रौ ४,१,९.
सं√लिप्>सं-लिप्य काश्रौ १६, ३, २७.
सं-लिप्यमा(न>)ना- -नाम् माश्रौ ६,१,२,८.
सं√ली>सं-लीयमान- -नम् बौश्रौ २०,१९ : ३१.
सं√लुप्(=√लुभ्),संलोपयते बौपि १,१७ : २०[e]; संलोपयन्ते बौश्रौ १९, २ : २८[f]; संलोपयेत् भाश्रौ ९,१४,८.
सं-लुप्य वाश्रौ २,२,३,१९.
सं√लुभ् (=√लुप्), संलोभयन्ति[f] आपश्रौ १९, ११, १०; हिश्रौ २३,२, १०; संलोभयेयुः[g] द्राश्रौ ६,३,५; लाश्रौ २,११,२.
सं-लुब्ध- -ब्धम् या ६,३.
सं-लोभयत्- -यन् हिपि ११ : ८[e].
सं-लोभ्य आपश्रौ १६, ३, ७; १७, १२, ८; वैश्रौ.
सं-लोभ्य- -भ्यम् आपश्रौ १८, ११,११; हिश्रौ १३,४,२८.
सं√लोक्>सं-लोक- >सं-लोकिन्[h]- -की गोगृ ४,७,१९[i].
संवत् पाग १,१,३७.
†१सं-वत्[j]- -वतः आपश्रौ १६, ९, ११; बौश्रौ १०,१३ : २३; माश्रौ ६, १, ३, २८; वाश्रौ; निघ २, १७[k]; -वतम् शुप्रा ६,८.
२सं-वत्- > °ती[j]- -त्यौ माश्रौ ५, १,५,२१†.
सं-वत्सर[l]- बाउ ३,७२; पाग ४, ३, ७३; -रः आश्रौ १,११,७†; ४, ८, १५; ८, १३, ३१××; शांश्रौ; वाधूश्रौ ३,१७ : २७; आगृ २, ४, १४†[l]; -रम्[m] आश्रौ २, १२, ६; ३, ११, ३; ४, २, १४××; शांश्रौ; शैशि १०६†[n]; -रम्ऽ-रम् शांश्रौ ३, ८,४; -रस्य शांश्रौ १४, २,१३; १५, ५,११××; आपश्रौ; -राः आश्रौ १२, ५, १३; १४; १६; शांश्रौ;-राणाम् वाधूश्रौ ४,११९ : ५; या ११,५; -राणि वाश्रौ १, ७,५,९; गौध १५, १४[o]; -रात् आश्रौ ४, २, १४; ६,१०, २४; काश्रौ; पावा ४, ३, १६[p]; -रान् शांश्रौ १३, २७, १; २८, ५; आपश्रौ; -राय शांश्रौ १६, १, १५; १०,९; आपश्रौ २०, २३, १२; २१, १५, ४†; बौश्रौ; -रे शांश्रौ २,२, २; ८, २०, १†; १३, ११, ८××; काश्रौ; गौध ५, २९[q]; -रेऽ-रे आश्रौ २,४,१; काश्रौ ६,१,१; आपश्रौ; -रेण आश्रौ ४, १२, २; बौश्रौ १०,४८:२२†; वाधूश्रौ; -रेभ्यः कौगृ ३, १०,९†; शांगृ २, १४, ८†; वैगृ २, १२ : ११; -रेषु आपश्रौ ८, २२, १५; भाश्रौ ८, २४, १४; लाश्रौ; -रैः बौश्रौ १५,३८ :१५; -रौ बौश्रौ

---

*a*) क्रमशः संरुन्ध्ये°, संरुन्धे° इति पाठौ ? यनि. शोधः (तु. C.)। *b*) बस. । *c*) सपा. मै २, ८, ८ विभे.। *d*) =संरक्षण-। *e*) सप्र. संलोपयते<>संलोभयन् एति इति पाभे.। *f*) परस्परं पाभे.। *g*) धा. एकत्रीकरणे वृत्तिरिति लाश्रौ. भाष्यम् । *h*) न संलोकी इत्यस्य स्थाने द्रागृ ४, २, १४ असंलोकी इति पाभे. । *i*) °कि इत्यपि पाठः (तु. भाष्यम्)। *j*) वैप १ द्र.। *k*) =संग्राम-। *l*) पाभे. पृ २२६७ w द्र.। *m*) क्वचित् वा. क्रिवि. । *n*) °वथ्स° इत्यत्र तकारस्य थकारः सांहितिकः। *o*) तु. St.। *p*) तु. पाका. पासि.। *q*) संवत्सरे पुनः इत्यस्य स्थाने सप्र. बौगृ १, २,६६ संवत्सरपर्यागतेभ्यः इति, आपध २,८,७ परिसंवत्सरादुपतिष्ठद्भ्यः इति, बौध २,३,५७ संवत्सरगतागतौ इति च पाभे. ।

  

१५,४ : ९; ११; भाश्रौ ८, २४, १०; हिश्रौ ५, ६, १३; लाश्रौ.

?संवत्सरी[a]- -रीम् वाश्रौ २, १,७,१४.

सांवत्सर- पा ४, ३, ७३; पावा ४,३,१६; -रः आश्रौ ३, ८,५; -रम् आश्रौ ३, १४, २२; -रेषु मागृ २,१०,७.

सांवत्सर-पुरोहित[b]- -तौ अप २,१,४.

सांवत्सरा(र-अ)धीन[b]- -नः विध ३,७५.

सांवत्सरक- पा ४,३,५०.

सांवत्सरिक- पा ४, ३, ५०; -कः हिश्रौ ३, ५, १२; -कम् निसू १०, ३ : ४४; ४ : १९; कागृ ६६,६; अप; -कस्य लाश्रौ १०,५,४; पागृ २, १,१; भागृ; -काणाम् आपश्रौ २४, ४, ५; बौश्रौ २४,५ : १०; लाश्रौ १०, ५, २०[२]; निसू १०, ३ : ३०; ५ : ५; -काणि आश्रौ २, १४, २; आपश्रौ ९, ३, १५; बौश्रौ; वाश्रौ १, ७, ५, ८?[c]; -केभ्यः लाश्रौ ८, २, १४; १०, १, ६; -केषु गोगृ २,८,१९; -कैः वौगृ ३,२,४.

संवत्सर-काम- -मः बौश्रौ १६,१२: ९[d]; -मान् आश्रौ ११, ६,१०[e].

संवत्सर-कृत- -तात् विध ८९,३.

संवत्सर-क्लृप्त- -प्तः बौश्रौ १६, ३६ : ८.

संवत्सर-गता(त-आ)गत- -तौ बौध २,३,५७[f].

संवत्सर-गर्भ[g]- -र्भः बौश्रौ २६, २० : ६.

संवत्सर-गाथा- -था आपश्रौ २१, २०, ३; -थाः हिश्रौ १६, ६, ४०[२]; -थाम् आपश्रौ २१,२०,१.

संवत्सर-ग्रहण- -णम् पावा ७, ३, १५.

संवत्सर-चारिन्- -री सुध ५६.

संवत्सर-जा(त>)ता- पाग २, २, ३७[h].

संवत्सर-तम- पा ५, २, ५७; -मे बौश्रौ २६,२६ : ४.

संवत्सरतमी[i]- -म्याम् बौश्रौ २६,२७ : २४; वाधूश्रौ ३,१८ : ३;४; कौसू ७२,३१.

संवत्सर-दी(क्षा>)क्ष[g]- -क्षः काश्रौ २२,१,४४.

संवत्सर-दीक्षा- -क्षा बौश्रौ १७, २० : २;२२ : २.

†संवत्सर-नामन्[j]- -मानि आपश्रौ १९,१२,१५; हिश्रौ २३,२,२६.

संवत्सर-निचय[g]- -यः विध ९४, ११;१२.

संवत्सर-परा(र्ध्य>)र्ध्या[g]- -र्ध्या भाश्रौ १०,२,१०.

संवत्सर-पर्यागत- -तेभ्यः बौगृ १, २,६६[f].

†संवत्सर-प्रति(म>)मा- -माः बौश्रौ २५, १ : १४.

संवत्सर-प्रधान[g]- -नः या ४,२७.

संवत्सर-प्रवर्ह[k]- -र्हः द्राश्रौ ८,१,४; लाश्रौ ४,५,४; निसू ४,१२ : ७.

संवत्सर-प्रभृति- -तीनि काश्रौ २४, ४,२.

संवत्सर-प्रयोग[g]- -गे शांश्रौ ३,११, १६.

संवत्सर-प्रवल्ह[k]- -ल्हम् श्राश्रौ १०, ५,७.

संवत्सर-प्रवात[l]- -ताः भाश्रौ ५, १९, ८; -तान् वैश्रौ १, १९ : १५; -तैः आपश्रौ ५, २७,११; हिश्रौ ३,६,११.

संवत्सर-ब्राह्मण[m]- -णम् निसू ३, ११ : २६.

संवत्सर-भृत्- -भृतः बौशु ७ : १९; -भृतम् बौश्रौ १०,१२ : २.

संवत्सर-भृत- >°तिन्- -तिनः काश्रौ १६,६,९.

संवत्सर-वर्ग- -र्गे लाश्रौ १०,१४,४.

संवत्सर-विपाक->°किन्- -किनः अप ६८, २, ५८.

संवत्सर-व्रत- -तम् शंध ३९५[n].

संवत्सर-श्राद्ध- -द्धम् आग्निगृ ३,३, १ : ५; २ : ३१; -द्धे आग्निगृ ३,३,२ : १५.

संवत्सर-संस्थ[o]- -स्थम् ऋअ २,१, १६४.

संवत्सर-संख्य- -ख्यस्य पा ७,३, १५.

संवत्सर-सत्र- -त्राणि शांश्रौ १३, १९,१८.

संवत्सर-सद्- -सदः बौश्रौ १४, १५ : २२.

संवत्सर-समाश्रय[p]- -ये अप ७०, ८,१.

---

*a*) = ऋच्- । *b*) पूप. = ज्योतिर्विद्- । तद्वेदेत्यर्थे अण् प्र. । *c*) °रीका° इति पाठः? यनि. शोधः । *d*) = संवत्सर-क्रतु- (तु. संस्कर्तुः टि.) । *e*) पूप. = गवामयन- (तु. भाष्यम्) । *f*) पामे. पृ २४६९ q द्र. । *g*) वस. । *h*) तु. पागम. । *i*) वैप २, ३खं. द्र. । *j*) = इष्टका-विशेष- । *k*) = गवामयन-भेद । उस. वा बस. वा । *l*) उप. <प्र√वै । *m*) उप. = १ब्राह्मण- । *n*) सप्र. शङ्खस्मृतिः १७,१५ °त्सरं व्र° इति पामे. । *o*) उस. (तु. षड्गुरुशिष्यः) वा बस. उप. = संस्था- वा । *p*) उस. वा बस. वा ।

संवत्सर-संपद्- -पदे निसू ७, ६ : १२.
संवत्सर-संपन्न- -न्नम् बौश्रौ १७, २७ : ६.
संवत्सर-संमित,ता[a]- -तः शांश्रौ १३,१७,३; आपश्रौ २३,७,११; -ताः आश्रौ ११, ३, ३;६,१२; हिश्रौ १८, ३,३; -तासु लाश्रौ १०, ५,१; निसू १०, ३ : १६; ५:७;१५; -ते काश्रौ२४,३,१५.
संवत्सरसंमिता-स्थान[b]- -नम् निसू १०,४ : १७.
संवत्सर-सहस्र- -स्रम् विध ४३,२७
संवत्सर-सुत्या- -त्याम् निसू १०, ११ : ११; -त्यायाः निसू १०, ११ : १६.
संवत्सरस्य-प्रवल्ह[c]- -ल्हः शांश्रौ १६,२६,४.
संवत्सरा(र-आख्या>)ख्य[b]- -ख्यः अप ७०,८,२.
संवत्सरा(र-अ)त्यासम्[d] लाश्रौ ९, ८,१७.
संवत्सरा(र-आ)देश- -शात् लाश्रौ १०,३,२०.
संवत्सरा(र-अ)न्त- -न्ते आश्रौ ९, ३,७; १०,७, ११; वैताश्रौ ३६, २५; ३७, २०; ३८, १४; विध २१, १२.
संवत्सरा(र-अ)न्तर् (:)विध २२,४०
संवत्सरा(र-आ)सि- -सिम् निसू ३, ११ : २८; ६,६:९; १०,३:२१.
संवत्सरा(र-अ)भिप्रयोग- -गः निसू १०,८ : २३; -गाः निसू १०, १३ : ८.
संवत्सरा( र-अ )भिप्राय[b]- -यः अप्राय ४,३.
संवत्सरा(र-अ)भ्यन्तर- -रे विध २१,२१.
संवत्सरा(र-अ)र्घ- -र्धम् शंध ३९५.
संवत्सरा(र-अ)वगाध[e]- -धम् बौश्रौ १७,५१ : १९; ५२ : १२; ५३: १३.
संवत्सरा( र-अ)वम[b]- -मम् आश्रौ ८,१४,१; बौध १,२,३.
संवत्सरा(र-अ)वर- -रः वागृ ७, २२; -रेषु काश्रौ १३,४,४.
संवत्सरा( र-अ )वरार्ध्य- -र्ध्यम् हिध २,५,१४१.
संवत्सरा(र-अ)स्मृति- -तौ काश्रौ २१,३,१,
संवत्सरा(र-आ)हिता(त-अ)ग्नि- -ग्नेः काश्रौ १६,६,११.
संवत्सरीण,णा- पा ५, १, ९२; -†णम् कौगृ ३, ५,८; शांगृ ३, १०,३; -†णाम् आपश्रौ ८, ३, ४; बौश्रौ ५,४:३२;७,१४:२३; १४,५ : २७; ३० : २$; माश्रौ.
संवत्सरी(य>)या- पा ५,१,९२; -†या माश्रौ १, ६, ४, २१; वाश्रौ १,५,५,७; -याम् माश्रौ १,७,२,२१; -यायाः चाश्र २ : १४.
संवत्सरे( र-ई )प्सु- -प्सोः काश्रौ ५,११,१६.
संवत्सरे( र-इ )ष्टका- -काः बौश्रौ १९, ३ : ४०.
सं √वद्, संवदते भागृ २,२६ : १२; संवदति आज्यो ९, ३; संवदेते काश्रौ २०,७,१०; संवदन्ते काश्रौ २०, ६, १८; †संवदस्व काश्रौ ३, ६,१५[२]; १०,५,६; आपश्रौ; †संवदध्वम् आग्निगृ ३,११, ३ : २४; गौपि २, ६, २२; सम् (वदध्वम्) बृदे ८,९७†;समवदत माग्रृ १, १०, १५†; समवदत् ऋअ २, १०,५०; संवदेत बौश्रौ २५,२३ : ३; कौगृ ३,११,३८[f]; बौगृ १, ७,२२; संवदेत् शांगृ ४, ११, ६[f]; संवदेरन् द्राश्रौ ७, ३, ६; लाश्रौ ३, ३,९.
समूदे बृदे २, ८५; या ११, २५; समूदिरे ऋअ २, १०, ८६; बृदे ४, १०५××; अअ; समवादिषत वाधूश्रौ ४, ७५ : २०; ३२.
संवादयेत शांश्रौ १७, १४,२.
सं-वदन- -ने बौश्रौ २०,२९ : १५; २१,२१ : २४.
सं-वाद- -दः आपश्रौ १०, १२, १२†; माश्रौ १०, ७,१८; वैश्रौ; -दम् हिश्रौ १६,१,३६; आपगृ २२,१९;भागृ; -दाः बौश्रौ २५, ९ : ५; -दात् काश्रौ १०,५,७; -दे हिश्रौ १६, १, ३६; बौध २, २, ७९; चाअ ४१ : ७; -देषु बृदे २, ८८.
संवाद-जयन- -नम् भागृ २, २६ : ९[g].
संवाद-प्रभृति- -ति काश्रौ १२, २, १०; -तिना हिश्रौ ७, ८, ५६; ९, ३,४२.
संवादप्रभृती( ति-इ )डान्त- -न्तेन माश्रौ २,५,१,२६.
संवादा(द-आ )दि- -दि आपश्रौ १८,६,१४; -दिना वैश्रौ १४, १८:१०; १६, १३ : ५.
संवादा( द-अ )भिजयन- -नम् हिगृ १, १५,४[g].

a) = विधृति-भेद-। b) बस.। c) पृ २४७० k द्र.। d) उप. < अत्य(ति√अ)स [क्षेपणे]। e) पृ २५७ f द्र.। f) परस्परं पाभे.। g) परस्परं पाभे.।

सं-वादितृ- -ता हिपि १४ : ४.

सं-वादिन्-(>सांवाद्य- पा.) पाग ५,१,१२४.

सं-वाद्य गौध २८,१८.

१सम्-उद्य आपश्रौ १२,६,८;माश्रौ.

?संवदान्याम्[a] भागृ ३, १३ : ११.

**सं √वन्** > सं-वनन[b]- -नः[c] ऋअ २, १०, १९१; बृदे ३, ५९; शुअ २,२३३; -नम् पागृ १, ६, २; आग्निगृ १, ५, ४ : १; ४०[d]; ४१; कागृ २९, १[२d]; बौगृ १, ४, ४; ५[d]; भागृ १, १७ : १४[२d]; मागृ १,१४,१२[२d]; वागृ १५,२२; हिगृ १, २०, ३; २४, ६[२d]; बृदे ४,५३; ८, ३२; ९७; -नान् भागृ १,१६ : १६.

†संवनिन्- -निनौ आग्निगृ १,५, ४ : ४१; बौगृ १,४,५; भागृ.

**सं √वप्**, संवपति काश्रौ १६, ३,३; आपश्रौ १, २४, १; बौश्रौ; †संवपामि आपश्रौ १, २४, १; काश्रौसं ४ : ६; बौश्रौ; संवपेत् आश्रौ ३,१०, ९; बौश्रौ २४,२६ : ६.

सं-वपत्- -पन् आपश्रौ १, २४, २; बौश्रौ २४,२६ : ६; वैश्रौ.

सं-वपन- -नम् मीसू १०, १, ५२; -ने बौश्रौ ३, २४ : ७.

संवपना(न-आ)दि- -दि काश्रौ १५, १,९.

सं-वाप-> °प-मन्त्र- -न्त्रैः वैध २, ५, ६.

सं-वापन-> °ना(न-अ)न्त- -न्तम् वैगृ ५, १४ : ८.

सम्-उप्त- -प्तः बौश्रौ २, १७ : १; -प्ते हिश्रौ ९,५,१४.

सम्-उप्य बौश्रौ २,१३ : २२××; कागृ १६,५.

**संवर-**(>√संवर्य पा.) पाग ३, १, २७.

**सं-वरण-** सं √वृ(आच्छादने) द्र.

**सं-वर्ग-** सं √वृज् द्र.

**सं √वर्ण्**, संवर्णयन्ति निसू ९, १३ : ९; ३४.

सं-वर्णयत्- -यन् निसू ४, ४ : ८.

**सं-वर्त-** प्रमृ. सं √वृत् द्र.

**सं √वल्ग्** >†सं-वल्ग[e]- -ल्गः माश्रौ १,६,२,१७.

**सं √वस्**( निवासे ),संवसन्ते वाधूश्रौ ४, २६ : ३७; या ४, २७; संवसन्ति माश्रौ १, ५, १, ३२; †?संवसाम[f] मागृ १,१४,६; २, ११, १७; संवसेत वाध १२, ५; संवसेत् वागृ ६,७; वाध २०, ४५; विध; संवसेयुः द्राश्रौ ११,४, २३; लाश्रौ ४, ४, २२; †संवसेय आपश्रौ ५, १४, ५; बौश्रौ २, १७ : १२; हिश्रौ ६, ५,१४.

समूषिरे वाधूश्रौ ३,३९ : १.

†संवासय आपश्रौ ५, ७, १७; बौश्रौ २,१५ : २१; भाश्रौ.

†सं-वसत्- -सन्तः[g] आपश्रौ ७, ५, १; भाश्रौ ७,४,१; हिश्रौ ४,१, ६२.

सं-वसथ- पाउ ३,११६.

सं-वसन- -नम् वागृ १५,२२†[d].

१सं-वसान- -नौ आपमं १, ३, १४†.

सं-वास- पाग ५, १, १०१; -सः भागृ १, ११ : ४; बौध ३, २, १६; ३,२३; -सम् बृदे ७,१४८.

सांवासिक- पा ५,१,१०१.

**सं √वस्**( आच्छादने ), †संवसन्ताम् आपश्रौ १४,२८,४[h];हिश्रौ १५, ७, १२?[h,i]; †संवसेथाम्[j] माश्रौ ६,१,१,२५; वाश्रौ २,१,१,२०. †संवसाथाम्[j] बौश्रौ १०, ३ : १३; वैश्रौ १८, १ : ३६.

२सं-वसा(न>)ना- -नाः आपश्रौ ४,१,१०[२]; ७, १७, १[k]; बौश्रौ ४, ६ : ३६[k]; ११, ४ : २०[k]; भाश्रौ ४, २, २[२]; ७, १३, ४[k]; हिश्रौ १,२,५[२];४,३,५४[k]; जैश्रौ

**सं-वसु[l]-** -सवः अअ ७, १०९†.

**सं √वस्त्र**(<वस्त्र-), संवस्त्रयेत कागृ १, १६[m]; संवस्त्रयेत् मागृ १, १, ५[m].

सं-वस्त्रण- -णम् मागृ १,२,१९.

**सं √वह्**, संवहति वाधूश्रौ ३,६९:१८; ७६ : १; संवहन्ति बौश्रौ १८, ४९ : १०; १८; सम्‥वहेयुः वाधूश्रौ २,२१ : १.

संवाहयेयुः[n] वैगृ ३,१४ : ३.

सं-वाह्य[n] आपध १, ६, १; हिध १, २,२७.

---

*a*) सपा. बौगृ २, ८,२९ संवरणदेशे इति पाभे.। *b*) उप. भावाद्यर्थे प्र.। *c*) = ऋषि-विशेष-। *d*) सपा. संवननम्<>संवसनम् इति पाभे.। *e*) उप. कर्तरि कृत्। *f*) संवसानि इति शोधः (तु. Kn. टि., संविशामि इति पाभे. च)। *g*) पाभे. वैप १ तै ३, ५, १,१ टि. द्र.। *h*) पाभे. वैप १, संवसन्ताम् काठ ३५,९ टि. द्र.। *i*) °वसाथाम् इति पाठः? यनि. शोधः (तु. आपश्रौ.)। *j*) सपा. °सेथाम् (मै २,७, ३[२] च)<>°साथाम् (मा ११,३०;३१ प्रमृ. च) इति पाभे.। *k*) सपा. मै ४, २,१० संविशन्तीः इति पाभे.। *l*) वैप १ द्र.। *m*) परस्परं पाभे.। *n*) धा. अङ्गमर्दने वृत्तिः।

सं-वाह्यमान[a]- >°ना(न-अ)ङ्घ्रि-युग[b]- -गम् विध १,४३.

सम्-उह्य माश्रौ १,५,५,९; ५, २, १,४; लाश्रौ ३, २, ११; क्षुसू.

सम्-उह्य- -ह्यः शांश्रौ ६, १२, १०†[c].

समुह्य-पुरीष[d]- -षः काश्रौ १६, ५, ९; -षे काश्रौ १६, ५, १०.

सम्-उह्यमान- -नः वाधूश्रौ २,२१:४; -नस्य क्षुसू ३, ११:११; -नाः क्षुसू ३, ११:१५; -नानाम् क्षुसू ३,१२:१४.

सम्-ऊढ[,व्ह[e],व्ह[f]]- -ढः आश्रौ ८, ७,२५; १०, ३,२××; क्षुसू; -ढम् आपश्रौ १८, ९, १२†; †बौश्रौ ६, २४:२८; १२,४:७; वाश्रौ; -ढस्य क्षुसू ३,१०:२; ११:१[२]××; -ढात् शांश्रौ ११, १२,१२; १४, ३९,२××; द्राश्रौ ८,१,७; लाश्रौ ४,५,२२; -ढे शांश्रौ १०,२,२; ३, ३; ४, ३××; द्राश्रौ; -ढेन शांश्रौ १०, ८, २२; निसू ५, ६:७; -ढेषु वाश्रौ ३,२,२,१;२८.

समूढ-त्रिककुभ्[g]- -कुप् आश्रौ १०, ३,२१[h].

समूढ-रूप- -पेण क्षुसू ३, १२:२३.

समूढ-विकार- -रः मीसू १०,५, ८०.

समूढा(ढ-३आ)ज्य- -ज्यम् निसू ८, ३:३८; -ज्ये निसू ३,९:४६.

समूढा(ढ-अ)वच्छेद- -दः निसू ८,१२:१४.

**सं-वाद-** प्रमृ. सं √वद् द्र.

**सं-वाप-**, °पन- सं √वप् द्र.

**सं-वार-** सं √वृ (आच्छादने) द्र.

**सं √वाश्**, संवाशयेयुः द्राश्रौ ९, २, १; लाश्रौ ३,६,१.

समवावशीताम् या १२,३†.

सं-वाशिन्[i]- >सांवाशिन[j]- -नम् बौश्रौ १६, ५:१४; वाश्रौ ३, २,२,३;-नेन काश्रौ १२,३,१२;

सं-वाश्य बौश्रौ १६,५:१६.

**सं-वास-** सं √वस् (निवासे) द्र.

**सं-वाह-** पाग ४, २, ११६; ४, १०३.

सांवाहिक,का- पा ४,२,११६; ४, १०३.

सांवाहिकी- पा ४,२,११६.

**सं-वाह्य** प्रमृ. सं √वह् द्र.

**सं √विच्**, संविविक्तः ऋप्रा ८,१०†.

**सं √विज्**, सम्…विजेत आपश्रौ ९, १६, ११[k]; १५, १८, १०; भाश्रौ ९, १९,८; हिश्रौ १५,४, ४९[k].

†संविक्थाः[l] आपश्रौ २,१८,९; १२, १०, २; बौश्रौ १, ५:४; १३; १६:१२; भाश्रौ.

**सं-वि √ज्ञा** >संवि-ज्ञात- -तानि या १,१२.

संवि-ज्ञान- >°न-पद- -दानि बृदे ५,९५.

संविज्ञान-भूत- -तम् या ७, १३.

संवि-ज्ञाय द्राश्रौ ७,३,८.

**सं √विद्** (ज्ञाने)[m], †सम् (विदुः) कौसू ६२,२२; ६८, २७.

१सं-विद्[n]- पावाग ३,३, १०८[o]; -विदम् †गो २, ६;९; बृदे ७, १४७; या ११,३४†.

सं-वेदन- >सांवेदन[p]- -नम् अप्रा १,१,४.

**सं √विद्** (लाभे), संविन्दते आपमं १,१५,१†.

२सं-विद्[n]- -विदः आपश्रौ २२, १,८; हिश्रौ १७,१,९.

†सांवेद्य[q]- -द्ये वैताश्रौ ३६, २७; कौसू १८,२२.

†सं-विदान,ना[n]- -नः आश्रौ २,१९, २२; ५,१९, १; शांश्रौ ३, १८, १५[r]; आपश्रौ १४,२, १३[s]××; बौश्रौ ६, ३०:११; १७, ३:२[s]××; वाधूश्रौ; हिश्रौ९,७,२१[s], वैताश्रौ २५,१२[s]; आग्निगृ ३, ८, २:४५[t]; बौपि १, १५:५२[t]; मागृ १, १४,१६[s]; कौसू १२४, ४[s]; -ना वाश्रौ १, ४, ४, ४१; कौगृ १, १६, १८; शांगृ १,२४,

---

*a*) धा. अङ्गमर्दने वृत्तिः। *b*) वस.>षस.। *c*) सपा. का ५,८,५ काश्रौ ८,६,२२ आपश्रौ ११,१४, १० समूह्यः इति पाभे.। *d*) =[समुह्यपुरीष-चित-] स्थण्डिल- [तु. विद्याधरः]। *e*) आश्रौ. शांश्रौ. पाठः। *f*) या. पाठः। *g*) विप. ([समूढ-] नवरात्र-)। वस.। *h*) °ढः त्रि° इति आन.। *i*) भावे इनुण् (पा ३, ३,४४)। *j*) स्वार्थे अण् प्र. (पा ५,४,१५)। *k*) भिद्येत इति भाष्यम्। *l*) पाभे. वैप १ संविक्थाः मा १, २३ टि. द्र.। *m*) पावा १,३,२९ परामृष्टः द्र.। *n*) वैप १ द्र.। *o*) तु. पागम.। *p*) स्वार्थिकः अण् प्र.। *q*) =संगम-। स्वार्थिके ष्यञि उभयपदवृद्धिः। *r*) पाभे. वैप २, ३खं. वावृधानः तैब्रा २,५,८,३ टि. द्र.। *s*) पाभे. वैप १ संरराणः मा ८,३६ टि. द्र.। *t*) सपा. संविदानः (पै १९, ५,१३ तैआ ६, ७,२ च) <> संविदाना (मा १२,६३ प्रमृ. च) इति पाभे.।

१०; आग्निगृ ३, ६, ३ : २६[a]; बौपि १, १२ : २[a]; कौसू १०६, ७; –नाः शांश्रौ १५, ३, ७[b]; आपश्रौ ४, ४, ४; ५, ६××; बौश्रौ; हिगृ २, १५, ९[c]; –०नाः[d] कौगृ ३, ६, ९; शांगृ ३, ११, १४; –ने आपश्रौ ५, १५, ५; २१, २०, ७; बौश्रौ; या ९, ४०; –नौ आश्रौ ४, २, ३; शांश्रौ ३, १८, १४; वाधूश्रौ.

**सं-वि√धा>** संवि-हित– >°त–
सर्वो(र्व-उ)पकरण– -णः शंध २५३.

**सं-वि√धी,** संविधीमहि काग्र ४१, १८†.

**सं-वि√भज्>** संवि-भक्त– -क्तः शंध २४४; –क्तौ शंध २४८.
संवि-भज्य बौध २, १०, ५०; आपशु ४, ५.
संवि-भाग– -गः निसू १०,५ : १६; आपध १, २३, ६; २,९, १०; बौध २, ३, १६; हिध.

**सं-वि√मृश्>** संवि-मृशत्– -शतः काठश्रौ ९५.

**सं-वि√रम्>** संवि-रत– -तस्य निसू ७,१० : ११.

**सं√विश्**[e], संविशति शांश्रौ १६,१, ७; काश्रौ २०,१,१७; २२, ६, ४; बौश्रौ; सम्···विशति बौश्रौ ७, २ : १८; संविशतः काग्र ३०,२; ४; संविशन्ते अप ३७, १, २†; संविशन्ति बौश्रौ १८, ५० : १८; जैश्रौ ७ : ११; आपमं; शांगृ ४, १८, ६[f]; †संविशामि[g] आपश्रौ ६, २७, ५; हिश्रौ ६,७,८; आपमं १,८, २; काग्र २७, ३; वाग्र १५,१७; हिग्र १,२९,२; †संविशन्ताम्[h] आपश्रौ १,१६,१२; वैश्रौ ४,३ : ८; हिश्रौ १,४,५८; वैगृ १,११ : १३; †संविशन्तु वाश्रौ १,३,२, १; आपमं १,४,९; आगृ २,९,५; आग्निगृ; †सम्···विशन्तु बौश्रौ ८,२० : ८; वैश्रौ १६,२५ : ११; †संविशस्व आपश्रौ ९,१, १७; १०,३,८; भाश्रौ ९,१, १७××; हिश्रौ; †संविशानि[g] आश्रौ २, ५,१७; बौगृ १,५, ६; संविशेत् आपश्रौ १५, २०, २१; बौश्रौ ९, १९ : ३२××; भाश्रौ; संविशेरन् कौगृ ४,४, १०[f]; संविशेयुः द्राश्रौ ७, ४,५; लाश्रौ ३, ४, ४; द्राग्र ३, ३, २४; †संविशेयम्[g] कौगृ ३, ४, ३; शांगृ ३, ५, ३; संविशेम काग्र ११, २†.
संवेशयति कौसू ३९,१६; ७९, ६; ८३, २९; संवेशयन्ति आगृ ४, २, १५; हिपि १ : १६; संवेशयेत् आग्निगृ २, ७,६ : २; बौगृ ३, ४, २१; २४; अप.

**सं-विशत्–** -शन् आपश्रौ ६,२७,५; २२, ७, २४; द्राग्र ४, ४, २; आपध १,४,२४; बौध; –शन्तः माश्रौ ६, २,३,८†[i].

**सं-विष्ट–** -ष्टः अप २०, ३, १; आपध १,६,५; हिध १,२,३०; –ष्टम् आपगृ १५,५; –ष्टाभ्याम् भागृ १,२५ : ११.

**सं-वेश–** पाग ५, १,१०१[j]; –शः बौश्रौ १४, ४ : २३†; –शम् आग्निगृ २, ७,६ : १५; –†शाय शांश्रौ १३,५,४; काश्रौ.
सांवेशिक– पा ५,१, १०१.
संवेश-पति– -तये आश्रौ २, ४,१०†.

**सं-वेशन–** पाग ५,१,१०१; १११; –†नः[k] आपश्रौ ९, १, १७; भाश्रौ ९, ७,१७; माश्रौ ३, ४, १; हिश्रौ १५,१,१८; आग्निगृ ३, ६,३ : १९; बौपि १,११ : १६; –नम् आग्निगृ २, ७,६ : २; जैगृ १,२२ : २५; आपध २,१,१९; विध;–ने कौगृ ३,९,४१; शांगृ ४, ७,४; हिपि ९ : १०†; जैगृ १, २२ : ३०; –नेन बौश्रौ २४, ३१ : ४; –नेषु हिपि १ : १६.
संवेशनी– -नीम् अप ४, ३,५.
सांवेशनिक– पा ५,१,१०१.
संवेशन-प्रतिबोध– -धानाम् भाश्रौ १०,११,१३.
संवेशन-यजुस्– -जुः बौश्रौ ६, ६:२७;७:१९××; –जुषि बौश्रौ २१, १० : ४.

---

*a*) पाभे. पृ २४७३ t द्र. । *b*) सपा. शौ ७,१,१ पै २०, १,१ वावृधानाः इति पाभे. । *c*) सपा. आपमं २, २०, ३५ विभे. । *d*) पाभे. वैप १ सुभागाः तै ३, ३,९,१ टि. द्र. । *e*) वैप १ द्र. । *f*) सपा. संविशन्ति <> संविशेरन् इति पाभे. । *g*) सपा. संविशामि <> संविशानि <> संविशेयम् इति पाभे. । *h*) पाभे. वैप १ संसीदन्ताम् मै १,१,४ टि. द्र. । *i*) पाभे. वैप १ संवसन्तः तै ३, ५,१,१ टि. द्र. । *j*) तु. पागम. । *k*) =सपा. काठ ३५, १७ तैत्रा ३,७,१,४ तैआ ६, ३,१;४,२ । ऋ १०,५६,१ शौ १८,३,७ तु संवेशने इति पाभे. ।

संवेशन-रूप- -पाणि बौश्रौ २६, १३ : ८.

संवेशन-वेला- -लायाम् गोगृ ४,९,१६.

संवेशना(न-आ)दि- -दि आपगृ १९,१२; हिपि ५ : ११.

संवेशना(न-अ)न्त- -न्तम् कागृ ६०,८.

संवेशनीय,या- पा ५, १, १११; -याः बौश्रौ २६, १३ : ७;१८ : १६××.

सं-वेशिन्- (>सांवेश्य- पा.) पाग ५,१,१२४.

सं-वेश्य आग्निगृ ३,५, २ : ५; वैगृ ६३ : ३; बौगृ १,६,२२; बौपि.

सं √विष्>सं-वेष- (>सांवेषिक- पा.) पाग ५,१,१०१.

सं-विष्ट- सं√विश् द्र.

संवि-हित- संवि√धा द्र.

सं-वी(वि√ई)क्ष्, संवीक्ष्यते अप ७०³,९,१.

सं-वीत-, °तिन्- सं√व्ये द्र.

सं √वृ ( आच्छादने ), संवृण्वन्ति आपश्रौ १५, ५, १; भाश्रौ ११, ५,१; वैश्रौ; संवृणु आग्निगृ २, ६,८ : ४०†.

संवृणीरन् निसू ७,१ : ४.

सं-वरण- -णः[a] ऋअ २, ५, ३३; शुअ १, ६१८; -णम् ऋप्रा ६, १७; -णे जैगृ १, २३ : ११; ऋत ४,७,८.

सांवरण[a]- -णः ऋअ २, ९, १०१; साअ १,५४८.

संवरण-देश- -शे बौगृ २,८,२९.

सं-वार[b]- -रः आशि ८,७.

संवार-विवार- -रौ आशि ८,८.

सं-वृत,ता[c]- -तः गौध ५, ४३[d], शौच १, ३६; आशि ३, ११; -तम् शैशि ४७;३४२; माशि ६, ८;९; याशि; -ताः याशि २,९४; -ताम् नाशि २,६,८; -ते बौध २, ३, २१; विध ८१, ५; ऋप्रा १३,१; तैप्रा २,४; -तेन ऋप्रा १५,१६.

संवृत-कण्ठ[e]- -ण्ठाः आशि ४,४.

संवृत-करण[e]-तर- -रम् तैप्रा २,२७.

संवृत-ता- -ता आशि ८,५.

संवृत-त्व- -त्वम् आशि ८,२५; -त्वात् आशि ८,७.

संवृत-निवृत्त्य(त्ति-अ)र्थ- -र्थः पाप्रवा १,३.

संवृत-लक्षण- -णम् शैशि २४८.

संवृता(त-आ)दि- -दीनाम् पाप्रवा १८.

¹सं-वृत्य आपश्रौ १३, ९, २; २१, १२,६; माश्रौ.

सं √वृज्, संवृङ्क्ते वाधूश्रौ ३, १७ : १५; २१; समवृञ्जत वाधूश्रौ ३, १७ : १५; ४, १०० : २०; २१××; संवृञ्जीमहि वाधूश्रौ ३,१७ : १०.

सं-वर्ग[f]- -र्गाय आश्रौ ३, १३, ७; शांश्रौ ३,४,५; काश्रौ २५, ४, ३२; आपश्रौ १९, २५, ९; काश्रौसं ३२ : ४; बौश्रौ १३, ३५ : १२; हिश्रौ २२,५,२२.

संवर्ग-जित्[g]->सांवर्गजित- -ताः द्राश्रौ ८, ३, ३७; लाश्रौ ४,७,१५?[g]; निसू ५,१० : १२.

संवर्गा(र्ग-आ)हुति- -तीः बौश्रौ १५,१८ : १४; ३२ : ३; ३६ : १०.

†सं-वृज्[i]- -वृक् काश्रौ २६, ७, ५६; शुअ ४, १११.

?संवृज्यावृतः अप्राय २,७.

सं √वृत्, संवर्तते आपश्रौ ८, २, ६; संवर्तेते आपश्रौ २१, १९, ६; बौश्रौ १६, २२ : ७; हिश्रौ; सां(<सं)वर्तेते आपध २, ११, २०; हिध २, ४,३५; संवर्तताम् पागृ१,९,५†[h]; †समवर्तत आश्रौ २,१७,१५; ३,८,१; आपश्रौ.

संवर्तयति बौश्रौ २६, ७ : २३; वैश्रौ १६, १८ : १८; समवर्तयत् हिश्रौ ८,४,२७†.

सं-वर्त[a]- -र्तः ऋअ २, १०,१७२; साअ १, ४४३; ४५२; -र्तम् शंध ११६ : ४०[i]; -र्तस्य चाअ ३० : ६; ३८ : १७.

सांवर्त[j]- -र्तम् लाश्रौ ७, १,१.

संवर्त-वात[k]- -तः भागृ २,३० : ६; हिगृ १,१६,११.

सं-वर्तमान- -नेषु कौसू ३३,१८.

सं-वर्तयत्- -यतः चाअ ४० : ४; -यन् बृदे २,६१.

²सं-वृत्य आपगृ १९, ७; २०,७.

?संवृत्तः[l] या ५, ४.

---

*a*) व्यप.। *b*) =प्रयत्न-विशेष-। *c*) विप., नाप. ( b टि. द्र. [शौच. आशि. प्रभृ.] )। *d*) =कृच्छ्रापन्न-, दरिद्र-। *e*) बस.। *f*) वैप १ द्र.। *g*) °वर्ग्य° इति पाठः? यनि. शोधः (तु. द्राश्रौ. निसू.)। *h*) सपा. संवर्त° <> संवर्ध° इति पाभे.। *i*) =स्मृति-कार-। *j*) =साम-विशेष-। *k*) पूप. =वायु-विशेष-। *l*) पाठः ( तु. शिवसं. )? संवृतः इति दु., स वृतः इति (स्क., RN., भडकमकरः सा [ऋ १,१०,१]) च।

सं√वृध्, †संवर्धताम्[a] कौगृ १,१०, २४; शांगृ १, १७, ९; आग्निगृ १,५,५ : १६.

सं√वृ,व्रश्च्>सं·वृश्च्य आपश्रौ ९, २०,१;२०,२५,१४[b]; वैश्रौ २०, ३९ : ३; हिश्रौ १४,६,२५?[b,c].

सं·व्रश्चम्[b] शांश्रौ १६, १५, ११; काश्रौ २१,२,६.

सं-वेदन– सं√विद्(ज्ञाने) द्र.

सं-वेश– प्रमृ. सं√विश् द्र.

सं-वेष– सं√विष् द्र.

सं√वेष्ट्,संवेष्टयति आग्निगृ ३, १०, ५ : ५.

सं-वेष्टित– -तम् गोगृ २,१,१९.

सं-वेष्ट्य काश्रौ १५,५,१३; आपश्रौ ७,१७,६××; बौश्रौ.

सं√व्यच्,सम्…विव्याच ऋप्रा ४, ८३†.

सं-व्य(वि-अ)व√हृ > संव्यव·हार– -रः आपध १, २१, ५; बौध २, २,४२; हिध १,६,३५.

सं-व्या(वि-आ)√ख्या>संव्या-ख्यास्यत्– -स्यन् बौश्रौ १४, ११ : ३२.

?संव्याड– पाग २,१,४०.

सं-व्यू( वि√ऊ )ह्>सं-व्यू(वि-ऊ)ह्य निसू ७,११ : ३१; १०,४ : ४.

सं√व्ये,†संव्ययन्ताम् वैश्रौ २१,१५ : १३[d]; आपमं२,११,४[e]; वागृ५, ९[f]; १६,१; †संव्ययन्तु[f] आपमं २, २,५; आग्निगृ १, १, २ : २८; ५, १ : २०; कागृ २५, ४; बौगृ २,५,११; भागृ १,५ : १३; १३ : ३; मागृ १,१०, ८; २२,३; हिगृ १, ४, २; जैगृ १, २० : १५; †संव्ययस्व बौश्रौ १०,४ : ८; पागृ १,४,१३[f].

समव्यत् या ४,११.

सं-वीत,ता– पाग २,१,४०; –तम् आगृ १, १९, १०; कौसू १८, १८; –ताम् वागृ १३,१.

संवीतिन्– -ती कौगृ २,५,१.

सं-व्यय(त् >)न्ती– -न्ती आग्निगृ ३,५,६ : ८; बौपि १,४ : २४.

सं√व्रज्>सं-व्रजत्– -जन् काश्रौ ४,१५,३१.

सं√शंस्,शस्, संशंसति शांश्रौ १०, १३, १०†; १५; ११, १२, ८; संशंसेत् शांश्रौ१६,७,१३;१४,२ संशस्येत् शांश्रौ १७,९,६.

सं-शंसा– > सांशंसिक– -कम् वैताश्रौ २५,८.

सं-शस्य शांश्रौ ११,२,१३.

?संशाकला[g]( >°ला√कृ )

सं√शब्द्>सं-शब्द– -ब्दम् अपं १ : ५.

सं√शम्,समशमयन्,संशमयेमहि शांश्रौ १४,२९,१.

सं-शान्त,न्ता– -न्तम् वाधूश्रौ ४, २८[३] : ५; –न्ता वाधूश्रौ ४,२८[३] : ७; –न्ताम् वाधूश्रौ ४,२८[३] : ६.

सं-शर– सं√शॄ (हिंसायाम्) द्र.

सं-शान– सं√शो द्र.

सं√शास्,संशास्ति आपश्रौ १०,१८, ५; १६, १५, ६†; २१, १९, १४†;बौश्रौ; †संशाधि बौश्रौ २, १५ : २; वाधूश्रौ २,१ : १; सं… शाधि सु ३०,२.

†संशिशाधि बौश्रौ ६, ५ : ५; माश्रौ ६,१,८,१०; वाश्रौ २, १, ८,७.

संशशास वाधूश्रौ ३,८८ : १७; संशिष्यात् वाधूश्रौ ३,९२ : ७; आगृ ३,१२,२०.

सं-शासन– -नम् वाधूश्रौ ३, ७० : २; –नात् माश्रौ २,१,३,२१.

सं-शिष्ट– -ष्टः बौश्रौ १२,१२ : १५; १५, ५ : २७; वाधूश्रौ ४,१०४ : ६; –ष्टाः बौश्रौ १५,१६ : ६.

सं-शिष्य– -ष्यम् बौश्रौ २, १५ : २†; वाधूश्रौ २,१ : १;२;६ : २.

सं√शिञ्ज्,संशिञ्जयति आपश्रौ २, १३,६; माश्रौ २,१३,५; हिश्रौ २,१,१२.

१-२सं-शित– प्रमृ. सं√शो द्र.

सं-शिशारिपु– सं√शॄ(हिंसायाम्) द्र.

सं-शिशान– प्रमृ. सं√शो द्र.

सं√शी,संशयीत आपश्रौ ३,१५,११[h].

सं-शय– पागम ३६०; –यः निसू १०,७ : ८; कप्र; –यम् आगृ ३, ९,६; हिपि २० : २; –याः निसू १०,७ : ११; –यात् शंध २९०; विध १०,११××; वैध१,११,१०; शुप्रा ५,३४; –ये आश्रौ १,३,५; ८,१२,११; १०, ५,१८; निसू; –येषु निसू १०, ५ : १८; ७ : १४; माशि १६,३.

सांशयिक– पा ५, १, ७३; –कः या ७, ९; –कानाम् उनिसू २ : २२.

सांशयिकी– -कीम् वाध १२, ४४; आपध १, ३२, २७;

*a*) पाभे. पृ २४७५ j द्र.। *b*) सपा. संवृश्च्य<>संव्रश्चम् इति पाभे.। *c*) °श्च इति पाठः? यनि. शोधः (तु. आपश्रौ.)। *d*) सपा. काठ ३५, ९ संवसन्ताम् इति पाभे.। *e*) सपा. संव्ययन्ताम् (तै ३, ३,११,३ च) <> संव्ययन्तु (शौ ७,१८,३ च) इति पाभे.। *f*) सपा. संव्ययन्ताम् <> संव्ययन्तु (शौ १४, १,४५ च)<> संव्ययस्व इति पाभे.। *g*) पृ २३४८ c द्र.। *h*) पृ २८६ p द्र.।

हिध १,८,६८.

संशय-कारक– -काः अप ६१, १,११.

संशय-छेदन– -नाय दंवि १,३.

संशयो(य-उ)त्थापन– > °न-प्रश्न-प्रतिवाक्य– -क्यानि ऋप्र २,१,१६४.

सं√शुध्, संशोधयेत् अप २१,४,४; २४,२,१.

सं-शुद्ध– -द्धम् वाश्रौ ३,३,२, ३०; –द्धाः बौध ४,७,२.

सं-शोध्य वैश्रौ १,५ : ९××; वैगृ.

सं-शोध्य– -ध्यानि वैध ३,३,११.

सं√श्रु, श्रु (श्रवणे)[a], संश्रवसि गोगृ २,८,२१†[b].

संश्रावयेत् जैश्रौ २५ : ३.

†सं-श्रवस्[c]– -वसे काश्रौ १९, ५, ३; वाश्रौ ३, २,७,३१; वैताश्रौ ३०,१८.

सं-श्राव– -वः बौश्रौ २,३ : १२.

सं-श्रु(ज्ञ>)ज्ञी[d]– ज्ञीम् गो १,६†.

सं√शॄ( हिंसायाम् ), सम्···शीर्यते बौश्रौ ६, ८ : ६; संशीर्येत भाश्रौ १०,१२,९; वैश्रौ २०, ३९ : ६; हिश्रौ १७, ७, २९; अप्राय २,९; सम्···शीर्येत आपश्रौ ९, २०, ४; भाश्रौ ११, १८, ११; वाधूश्रौ २,२० : ४.

†संशारीः बौश्रौ १५,३१ : २३; आपमं २,७, २६; भागृ २,२१ : ६.

सं-शर[d]– -रः लाश्रौ १०,७,४.

सं-शिशरिपु– -पुः या ६,३१.

सं-शीर्ण,र्णा– -र्णः काश्रौ २३, ४, २०; आपश्रौ २२,२१,४; –र्णाम् आपश्रौ १०,१८,१०; वैश्रौ १२, १४ : ५; –र्णैः वैध २,५,५.

सं-शीर्य आगृ ४,२,२२.

सं√शो, †सं···शिशन्ति काश्रौ २२, ६,१२; लाश्रौ ८,८,१३; वैताश्रौ ३०,१७?[e].

†संश्यति आपश्रौ १५,१२,१३; बौश्रौ १,११ : ४××; भाश्रौ.

सं-शान[f]– -नानि द्राश्रौ १३, ४,९; १५; लाश्रौ ५, ४, १६; वैताश्रौ ३०, १६; –ने बौश्रौ २०, ९ : १[g].

सांशान[f]– -नानि जैश्रौ २५ : ९.

†१सं-शित– -तः बौश्रौ २, ८ : ८; –तम् आपश्रौ १६,१०,७; बौश्रौ १०, १४ : ६; वाश्रौ २, १,२, २९; वैश्रौ १८,७ : २२; हिश्रौ.

संशित-व्रत[h]– -तः वाधूश्रौ ४, १८ : २१[२];३२; अप ७०[३],१,१; –ताः वाधूश्रौ ४,१८ : २४;२८.

२सं-शित[i]–(>सांशित्यायन[न >] नी– पा.) पाग ४,१,१८.

सं-शिशान– -नाः या १०,३०†$.

सं-शिश्यमान– -नाः या १०,३०.

?संश्यनानाम्[j] बौश्रौ २०,९ : २.

सां(<सम्)-शित्य आपध १, २९, ८; हिध १,७,६५.

संश्चत्[k]– पाउ २, ८५[l]; पाग ३,१, १२.

√संश्चाय पा ३,१,१२.

सं√श्रा>सं-श्रप्य अप १२,१,३.

सं√श्रि, संश्रयति वैताश्रौ १६, १२; संश्रयन्ते बृदे १, ६०; संश्रयेत् बौश्रौ २८,११ : १४.

सं-श्रय– -याः आग्निगृ २, ५, ३ : ४८; बौगृ ३,७,२९.

सं-श्रित– -तः कागृ ५,४; नाशि १, ५, ७[m]; –तम् भाशि ७७†; –ताः बौगृ १, १०, १२; बृदे १,१०७.

सं-श्रित्य कौसू ८६,११.

सं√श्लिष्, संश्लिष्यामहे बौध २, ६,२८†.

संश्लेषयते[n] आपश्रौ २१,१,१०†; संश्लेषयति हिश्रौ १६, १, ६†; संश्लेषयेत् आपध २, १२, १२; हिध २,४,४९.

†सं-श्लिष्– -श्लिट् आपश्रौ १६,३१, १; वैश्रौ १८, २० : ५५; हिश्रौ ११,८,४; –श्लिट्सु, -श्लिड्भ्यः, -श्लिषे आपश्रौ १६, ३१,१; वैश्रौ १८,२०:५६; हिश्रौ ११,८,४.

सं-श्लिष्ट– -ष्टम् आश्रौ १, ११, ५; –ष्टस्य वाधूश्रौ ३, २७ : ६; ७; –ष्टौ शुप्रा ४,१४८.

सं-श्लिष्य हिश्रौ ५,४,७२.

सं-श्लेषण– -णानि आपश्रौ १५, १७,८; भाश्रौ ११,१७,१०.

सं√सच्, संसचावहै या ५,९†.

सं√सज्,ञ्ज्, संसजन्ति वैश्रौ ९, ११ : १४; बृदे ७,५१.

सं-सक्त–>°क्त-पद-विन्यास– -सः कप्र ३,९,५.

संसक्त-मध्य[h]– -ध्यम् माश्रौ १, ८, १, १६; –ध्यानि माश्रौ २, ३,१,१३.

संसक्त-मूल[h]– -लः कप्र १,७,३.

---

*a*) पावा १,३,२९ परामृष्टः द्र. । *b*) पाभे. वैप २,३खं. मंत्रा १, ५,१६ टि. द्र. । *c*) पृ २२५९ e द्र. । *d*) वैप १ द्र. । *e*) °ष्यन्ति इति पाठः ? यनि. शोधः (तु. पूर्वे स्थले, C. च) । *f*) = साम-विशेष- । *g*) भाप. । *h*) बस. । *i*) = ऋषि-विशेष- । *j*) संशानानाम् इति शोधः इति ?संस्कर्ता । *k*) सं-श्च √चत् इति ?Pw. प्रमृ. । *l*) स(म्>)न्√चि । *m*) संस्थितः इति लासं. । *n*) परस्परं पाभे. ।

संसक्तीय[a]– -यः अप ३३,६,२.

सं-सङ्ग– -ङ्गम् या ७,२३.

**सं √सद्**, †संसीदन्ताम्[b] भाश्रौ १, १८, ९; माश्रौ १, २, १, १८; वाश्रौ १,२,४,१२; †संसीदस्व आश्रौ ४,६,३; शांश्रौ. †समसदत् आपश्रौ ४, ८, ४; भाश्रौ ४, १२, ३; हिश्रौ ६, २, २०.

संसादयति काश्रौ २, ३, ६; आपश्रौ १२,२,१५; १६, २१, २; बौश्रौ; संसादयन्ति बौश्रौ ६, २८ : ५; ७, १३ : ११××; वैश्रौ; †संसादयामि आपश्रौ १२,२,१५; माश्रौ २, ३,१,२१: हिश्रौ १, ७, ३४; †संसादयन्तु आपश्रौ १, १६, ८; भाश्रौ १, १८, ६; हिश्रौ १, ४, ५४; संसादय बौश्रौ ६, २४ : ७†; ३० : ४××; संसादयेत् बौश्रौ २४, २ : २; ३४ : ७; १४××; बौगृ १,४,४५.

सं-सद्[c]– -सत् शांश्रौ १७, १३, १०†; –सत्सु[d] निसू ९, १२ : १०; २१; १०,३ : १५; –सदः[d] काश्रौ २४, २, १४; शुप्रा ४, ८५†; –सदम् हिश्रौ ७, ५, ११†; सु ३०, ५; ६; आगृ २, ६, ११; –सदा आपश्रौ २३, ४, १[d]; बौश्रौ १४,१९:२६†; हिश्रौ १८, २, १[d]; आपमं; –†सदि बौश्रौ १७, ४० : २; आपमं २, ७,१; आग्निगृ १, ३, २ : ९; भागृ २, १८ : १२; हिगृ १, ९,४; –सद्भ्यः[d] निसू ९,१२ : २०.

सं-सदन–> °नीय– -यः आपश्रौ १३,१६,८†[e].

संसदाम्-अयन– -नम् आश्रौ ११, ३,११; शांश्रौ १३,१६,५; २०, १५; बौश्रौ २६,२१ : १०.

सं-सन्न– -न्नः बौश्रौ १७, ३१ : ९; –नानि हिश्रौ ६, २,२०.

सं-सादन– -नम् आपश्रौ १२,३,८; –नात् माश्रौ २, २,१, १८.

सं-साद्य शांश्रौ ४, ३, २; बौश्रौ १, ४ : १३××; माश्रौ.

सं-साद्यमान– -नाय काश्रौ २६, ६, २२;आपश्रौ १५,१२,१[२]; भाश्रौ; –ने आश्रौ ४, ६, ३; –नेभ्यः काश्रौ २६,६, २३; –नेषु शांश्रौ ५,१०,३२.

**सं √सन्** संसेत् हिश्रौ १३,६,१०[f,g].

**सं-सनिष्यदत्**– सं √स्यन्द् द्र.

**सं-समक**[c]– -कः वैताश्रौ ३७, २†.

**सं-सर्ग**– प्रमृ. सं √सृज् द्र.

**सं-सर्प**–, °र्पण– सं √सृप् द्र.

**सं-सर्या**– सं √सृ द्र.

**सं √सह्**>सं-सह्य– -ह्यः सु २८,२०

सं(सेहान– -नः)[c] आश्रौ ७, १२, १९†.

**सं √साध्**, संसाधयति बौश्रौ ३, ११ : २१; हिश्रौ २, ७, ५२; आपध २,७,९; हिध २,२,३०; संसाधयेत् आपध २, ९, १; हिध २, १,११६.

सं-साधन[h]–> °नी[i]– -नीम् हिश्रौ ५,४,८८.

संसाधनीय– -यः हिश्रौ १०, ५,१२†[e].

**सं-सार**– प्रमृ. सं √सृ द्र.

**सं √सिच्,ञ्च्**, संसिञ्चति आपश्रौ १२, १२, ५; वैश्रौ २०, २७ : ५; हिश्रौ १५, ४,३; संसिञ्चन्ति हिश्रौ ८,३,३६; संसिञ्चामि अअ २, २६†; †सम् ˙˙˙सिञ्चामि आपश्रौ ९, १३, ४; बौश्रौ; †सम्˙˙˙सिञ्चतु आपश्रौ १४, १६,१; हिश्रौ ८,४,४५××; बौध २, १, ३४; ४, २,११; †सम् (सिञ्चतु) आपश्रौ १४, १८, १[२]; हिश्रौ १५,५,४[२];पागृ; अप्राय ६, १; सम्˙˙˙सिञ्चन्तु आपश्रौ १४, १९,१; हिश्रौ; संसिञ्चेत् आपश्रौ ९,१३, ४; १४, १८, ७; बौश्रौ २०, २३ : २८; भाश्रौ.

सं-सिच्य गौपि १,५,२२.

**सं √सिध्**, संसिध्यन्ति बौश्रौ १३, ४० : १०; संसिध्येत् बौश्रौ २४, २:३; बौगृ १,२,५४; बाध २६, ११; विध ५५, २१; संसिध्येयुः बौश्रौ १७,४५ : ११.

सं-सिद्ध– -द्धम् बौश्रौ २३, १ : ५; –द्धेन कौसू १३५,९†.

**सं √सिव्**, संसीव्यति आग्निगृ ३, ५,१ : २०; बौपि १,२ : ७.

**सं √सु** (अभिषवे), संसुनवानि वाधूश्रौ ४,४० : ११.

सं-सव[j]– -वः आश्रौ ६, ६, ११; शांश्रौ १३,५, १; आपश्रौ १४, २०, ४; बौश्रौ १४, २७ : १; २३, ५ : १४; वैश्रौ २१, ६ :

---

*a*) = मन्त्रगण-विशेष-। *b*) पाभे. वैप १ संसीदन्ताम् टि. द्र.। *c*) वैप १ द्र.। *d*) = संसदाम्-अयन-। *e*) सपा. संसदनीयः <> संसाधनीयः इति पाभे.। *f*) पाभे. वैप १ सेत् मै ४, ४, ५ टि. द्र.। *g*) °सेदियाताम् इति संस्कर्तुः शोधश्चिन्त्यः। *h*) उप. भावे करणे च कृत्। *i*) = ऋच्-। *j*) = (समानजनपदे स्पर्धमानयोः समानकालिक- [दोषरूप-]) सोमयाग- (तु. ऐब्रा १,३)।

४;५; हिश्रौ १५,५, २३[४]; –वे बौश्रौ २३, ५ : १०; वाधूश्रौ ४, १०० : ३२; जैश्रौ ८ : ६; –वौ अप्राय ६,६[२].

सं-सुत– -ते क्षुसू १, ८ : १; –तौ आपश्रौ १४, १९, १[a]; हिश्रौ १५,५,१६[a].

संसुत-सोम[b]– -मे क्षुसू २, ३ : १३; द्राश्रौ ३,३,१८; लाश्रौ १, ११,१०.

सं-सुन्वत्– -न्वतोः बौश्रौ १४,४ : १५;१६.

सं√सृ>°सरत्– -रताम् विध ५, ७४.

सं-सर्या– (>°र्या√कृ पा.) पाग १,४,७४.

सं-सार– पाग २, ४, ३१[c]; –रम् वैध १,९,१३; १५; –रस्य विध ९६, २५; –रे विध ९६, ४०; वैध १,९,१०.

संसार-कर्म-विराम– -मे वौध २,१०,७.

संसार-संसृति– -तौ विध ९६, ३९.

सं-सृत,ता– -तम् या २, २४; ३, २०; –ताः अप ६८,१,४९.

संसृत-मध्यम[d]– -माः या ४, १३.

सं√सृज्, संसृज्येत् कप्र २,९,१६. संसृजति काश्रौ ६,८, ११; १५, ४, ३८××; आपश्रौ; संसृजेते शांश्रौ १४, २९, ३; संसृजतः कौसू १०६,१; संसृजन्ते वैताश्रौ २३, १६; †कौसू १३०, २; १३१, २; संसृजन्ति बौश्रौ ६, ९ : २; १०, १७ : २; १६,५ : १६; वाधूश्रौ ४,११६ : १; कौगृ ४, ३, २?[e]; शांगृ ४, १६, ४; †संसृजामि आश्रौ २, १०,१८; आपश्रौ १, १२, ११; १४; १७××; बौश्रौ; माश्रौ १, ३, ५, १३[f]; †सम्··· सृजामि शांश्रौ २, १०, ६[g]; आपश्रौ; सम् (सृजामि) शुअ २, ३३०†; सम् (सृजामहे) वैताश्रौ २३,१६†; †संसृजामसि[h] बौश्रौ १७,४१ : २१; आपमं २,८,८; मागृ २,२१ : २२; हिगृ १,११, १; †सम् (सृजामसि) कौसू १९, १४; अप १६, १,६; अअ ३, १४; †संसृजाथ आग्निगृ २, २, ५ : १४; ३, ६, १ : ३१; बौपि १, ९ : ७; हिगृ २,६,१०; †संसृजतु कागृ ६६,७; वागृ १३, २; विध २१, १४; †सम्··· सृजतु वैताश्रौ २१, २६; गो २, १९; †संसृजस्व माश्रौ १,४,१, ५[i]; आपमं[j] १, १, १०; ९, ४; कागृ २५, ९[j]; मागृ २, ८, ४; जैगृ १,२२ : ५[j]; या ३, २१ф[j]; †संसृज आपश्रौ ६, २४, ८; बौश्रौ १,१२ : २५;२१ : ३××; भाश्रौ; आग्निगृ १, ३,४ : १५[h]; †सम्···सृज आश्रौ २,५,९;३, १०,१६; आपश्रौ ३,२०,१०;६, २५,७××; बौश्रौ; हिश्रौ ६,७, ७?[k]; आपमं १,१०,१[l]; बौगृ १, ६, २३[l]; अप्राय ५, २; †सम् (सृज) अप ४२,२,२; अअ ९,१; †संसृजेथाम् आपश्रौ ६, १, ३; भाश्रौ ६, ७, ४; †सम् (सृजेथाम्) कौसू ७९, ८; अअ १४, २[२]; †संसृजतम् कागृ ३१, २; सम्···सृजत>ता ऋप्रा ७, ५३†;†सम् (सृजत>ता)आश्रौ ४, ७, ४; शांश्रौ ५, १०, ४; †संसृजतात् आश्रौ ३, ३, २; शांश्रौ ५, १७, ८; माश्रौ; समसृजताम् शांश्रौ १४, २९, ६; सम्···असृजत>ता ऋप्रा ८, ३१†; संसृजेत् काश्रौ २५, १४, ४; बौश्रौ १०, १३ : ११; वैश्रौ; हिश्रौ १६,४,३४[m]; संसृजेयाताम् हिश्रौ १५, ७, १८; संसृजेरन् भाश्रौ ९,५,६; १२; १५;१८.

†संसृक्षाथाम् आश्रौ ३, ९, ४; आपश्रौ १२, ३, ४; हिश्रौ १३, ८, २९; †समसृक्ष्महि[n] बौश्रौ ४,११ : ७; ५,९ : २३; ८,२० : २६; १७,३८ : १४; जैश्रौ २१ : १६; द्राश्रौ ६,४,१२; आपमं २, ६,६.

---

*a*) सोमौ संसुतौ इति पाठस्य स्थाने वैश्रौ २१, ५ : १ सोमसंसवे इति पाभे.। *b*) =सं-सव-। *c*) तु. पागम.। *d*) बस.। *e*) °जति इति पाठः? यनि. शोधः (तु. शांगृ.)। *f*) पाभे. वैप १ संजुहोमि का २,५,३ टि. द्र.। *g*) पाभे. वैप १ सम्···नह्यामि तै ३,५,६,१ टि. द्र.। *h*) सपा. संसृजामसि<>संसृज (खि ४,६,४ च) इति पाभे.। *i*) पाभे. वैप १ संसृज तै १, ५,१०,३ टि. द्र.। *j*) पाभे. वैप १ संसृजस्व ऋ १०, ८५,२७ टि. द्र.। *k*) सम्···संसृज इति पाठः? यनि. शोधः (तु. आश्रौ. प्रमृ.)। *l*) पाभे. वैप १ सम्···सृज ऋ १०, ८५,२२ टि. द्र.। *m*) सपा. आपश्रौ २१, १२,१ ससृजे इति पाभे.। *n*) पाभे. वैप १ समसृक्ष्महि मा २०,२२ टि. द्र.।

संसृज्यते बौश्रौ १५,८ : ४;१२; †कौसू १०८, १; २; अप्राय; संसृज्यन्ते वैश्रौ २०, ८ : १; †सम् (सृज्यन्ताम्) आपश्रौ ५, १०,२;१६,१४,४××; बौश्रौ २, १६:१३[२];१०,२० : ७[२]; माश्रौ; †सम्···सृज्यध्वम् बौश्रौ १,९ : ८; १२, ८ : २१; हिश्रौ १३, ५, १६; संसृज्येत बौश्रौ २०, २४ : ४०[२]; वैश्रौ २१, १६ : ४; ८; संसृज्येयाताम् आपश्रौ १४, ३०, २; बौश्रौ २९, ५ : १; माश्रौ; संसृज्येरन् आपश्रौ ९, ३, १८; बौश्रौ १३, ४३ : २२××; माश्रौ.

संसर्जयन्ति बौध २,२,५६.

सं-सर्ग,र्गा– -र्गः अप ५१, ५, ५; ७०[२], ३, १; –र्गम् वाधूश्रौ ३, १०६ : ४; ५; अप ७१, ३, २; वाध ४, २३; या १, ३; –र्गाः भागृ ३, ११ : १३[a]; बौशु १ : १६; –र्गात् शांश्रौ २, ६, २; बौश्रौ २०, ८ : ३३; तैप्रा २३, २; मीसू ९,४,३०; –र्गाय काश्रौ २५, ४, ३०[b]; –र्गे काश्रौ २५, ४, २९; बौश्रौ २३, ४ : १९; वैगृ; –र्गेण शंध ७७; ७९.

संसर्ग-काल– -ले काश्रौ २५, १२,३.

संसर्ग-रस-निष्पत्ति– -त्तेः मीसू ४, १,२३.

संसर्ग-सामान्य– -न्यात् बौध १,५,१०९.

संसर्ग-हेतु-त्व– -त्वात् मीसू १०,२,४.

संसर्गा(र्ग-अ)र्थ– -र्थम् आपश्रौ १६,१३,२; हिश्रौ ११,५,१३.

सं-सर्गिन्– पा ३,२, १४२; –र्गिषु मीसू ९,३,३०.

संसर्गि-त्व– -त्वात् मीसू ९, ३, ४१.

सं-सर्जन– -नात् हिपि १० : १४†; –नाय बौगृ २, ११, ६४; –ने आश्रौ ३, १३, ४; –नैः वैश्रौ १८,१ : ६१[c].

संसर्जना(न-आ)दि– -दि आपगृ १२,३; १६,८.

संसर्जनीय– -यैः आपश्रौ १६, ४,१[c]; हिश्रौ ११,१,४४.

सं-सृज्य काश्रौ ४,२,७××; आपश्रौ.

सं-सृष्ट,ष्टा– -ष्टः आपश्रौ ५, १०, २†; बौश्रौ २, १६ : १३; माश्रौ; –ष्टम् काश्रौ २५,१२, ४†; आपश्रौ ५, १०, २××; बौश्रौ; –ष्टस्य माश्रौ ५, २, २, १६; –ष्टाः आपश्रौ १९, १, १०; ५, ११; बौश्रौ १७, ३२ : ६; माश्रौ; –ष्टान् आपश्रौ २०, १४, १०; वैश्रौ ११, २ : १; २०, ९ : २; हिश्रौ ३, ३, ४१; १४, ३, १७; –ष्टानि हिश्रौ २४, १, १०; आपगृ ३, १५; –ष्टाभिः भागृ २, १९ : १५; –†ष्टाम् काश्रौ १६, ३, १९; आपश्रौ १६, ४,३; बौश्रौ; –ष्टासः वाश्रौ २, १, १,३५?[d]; –ष्टे आपश्रौ १९,२१, १६; हिश्रौ २२, ४, ६; हिगृ १, २६, २२; कौसू ७२, ३८; पा ४, ४, २२; पावा ४, ४, २४; –ष्टेन बौश्रौ २०, १ : ६३; हिध २,१,४९[e]; –ष्टेषु शांश्रौ ३, ४, ३[f]; –ष्टैः आपश्रौ २२, २६, ११; हिश्रौ २३, ४, २६.

संसृष्ट-कर्मन्– -र्म या ३,१०.

संसृष्ट-जित्– -जित् तैप्रा १६, २५†.

संसृष्ट-हविस्– -विः आपश्रौ १९, २१,१४; हिश्रौ २२,४,६.

संसृष्ट-होम– -मम् आपश्रौ ६, १०,९; १५, १२, ९; काश्रौसं ३५ : ११; माश्रौ.

संसृष्टिन्– -ष्टिनः विध १७, १७; –ष्टिनि गौध २८, २९; –ष्टी विध १७,१७; गौध २८, २९.

सं √सृप्, संसर्पन्ति आपश्रौ १२, १६,१७; अप ६४,७,६;†संसर्प[g] आपश्रौ १६,२५,२; वैश्रौ १८, १८ : २; हिश्रौ ११, ७, ४२; संसर्पेत् आपध १,६,३३; हिध १,२,५५.

सं-सर्प[h]– -र्पः †आपश्रौ ८, २०,८; १२,२७,५; बौश्रौ; अप ६४,४, १०; –र्पस्य लाश्रौ ९, १२,८; –र्पेण माश्रौ २,४,२,१३.

संसर्प-चतुर्वीर– -रयोः वैताश्रौ ४१,१३.

सं-सर्पण– -णे बौश्रौ २७, ४ : ९; १२; हिपि ४ : ६.

सं-सर्पत्– -र्पन् शांश्रौ १,६,१२.

सं-सृप्[i]– -सृपः वाश्रौ ३, ३,४,५;

---

*a*) विप.>नाप. (२अप्-)। उप. कर्मणि प्र. (तु. भू XXI)। *b*) विप. (अग्नि-)। *c*) परस्परं पाभे.। *d*) पाठः? संसृष्टाम् इति शोधः (तु. संस्कर्तुः टि., सप्र. माश्रौ ६, १, २, ४ च)। *e*) सूपे संसृष्टेन इत्यस्य स्थाने सपा. आपध २, ३; १९ सूपसंसृष्टेन इति पाभे.। *f*) पृ १५५९ l द्र.। *g*) सपा. मा १३,३१ प्रभृ. समसृपत इति पाभे.। *h*) नाप. (Lयाग-] अहीन- Lलाश्रौ.], मन्त्र- Lमाश्रौ.]), भाप. Lअप.]। *i*) वैप १ द्र.।

वैताश्रौ ३६, ३; -सृपाम् वाश्रौ ३,३,४,२९.

?संसृपा[a]- > °पा-हविस्- -वींषि काश्रौ १५,८,१[b].

?संसृपे(पा-इ)ष्टि- -ष्टिभिः आश्रौ ९, ३, १७[c]; -ष्टीनाम् आश्रौ ९,४,६.

संसृपां-हविस्- -विर्भिः आपश्रौ १८,२०,७; २२,२५,१३; बौश्रौ १८, ५ : १५; ६ : १७; हिश्रौ १३, ७, १; २३,४,८?[d].

संसृपाम्-इष्टि- -ष्टिभिः शांश्रौ १५,१४,२[c].

सं-सृष्ट- सं √सृज् द्र.

सं √सेव् , संसेवावहै या ५.९.

संसेव्यते अप ४७, २, ७; संसेव्यन्ताम् या ९, ३३; संसेव्यन्त या १२,४१[c].

सं-सेवित,ता- पाग २,१,५९; -ता वौश्रौ २६, १८ : ७.

सं-सेविन्[f]-(>सांसेवि- पा.) पाग ४,१,९६.

?संस्क[g] वाश्रौ ३, २, ८,२.

सं-स्करण- प्रभृ. सं-स् √कृ द्र.

?संस्करादीष्ट वाश्रौ ३,२,८,३.

?संस्कारक[h]- -काणि सुधप ८५:३.

सं-स् √कृ[i], संस्कुरुते बौश्रौ १८, ३८ : २; ६; १४; वाश्रौ; संस्करोति आपश्रौ १५, ६, ७; माश्रौ११,७,१;१२,५,१; माश्रौ; संस्कुर्वन्ति शांश्रौ ४, १५, २२; १७, ४, ५; वाधूश्रौ २,१६ : ६; वाश्रौ ३, १, २, २८××; संस्कुर्वीत बौश्रौ २०,६ : २०; संस्कुर्यात आग्निगृ ३, ९, १ : ९; ३ : १७; २२; बौपि; कप्र २, ७, ७; ८; शंध २९.

संचस्कार या १, १३; १४; संस्करिष्ये गौपि १,२,७.

संस्क्रियते वाध १७, २७; आपध २, १८, ९; बौध २,२, २५; विध १५,१६; हिध.

संस्कारयेत् बौश्रौ २४, १८ : ८.

सं-स्करण- -णम् काश्रौसं ३३ : १०; ११; १५; माश्रौ ३, १, १९; गोगृ ४,४,५.

संस्करण-कल्प- -ल्पः गोगृ १, ७,२६.

सं-स्कर्तृ- -र्ता आग्निगृ ३,१०,४ : ५; गौपि १, १, ५××; विध २२, ५९; ५१, ७४; -र्तारः आपध २, ३, ४; ३५; -र्तारम् आपध १,१,१२; हिध १,१,११; -र्तुः वैगृ ७,१ : ९.

सं-स्कार[j]- पाग ३, ४, ७४; -रः आपश्रौ ७,८,९; १५,६,८;.२४, १, २९; बौश्रौ; आपध २, ३, १५[k]; -रम् आग्निगृ २,७,८:२३; ३, १०, ४ : २३; ५ : ३; वैगृ; -रस्य मीसू ३, ४, ४४;५,४९;६, २५××; -राः आश्रौ ४,१,२०; काश्रौ १, ८, ३४; आपश्रौ १०, ३०, १३; १४, ५, २; भाश्रौ; -राणाम् गौध ८, २३; मीसू ५, ३, २१; ९, ४, ५०××; -रात् काश्रौ १२, १, ११; २५, ४, ३९; वाध ११, २३; सुध २०; मीसू ३,१,१५; -रान् आपश्रौ ८, ५, १९; आग्निगृ ३,९,३ : १०; बौपि; -रे बौश्रौ २१, १३ : १; २२;१४ : ९××; वैगृ; -रेण भाश्रौ १२, ५, १; -रेषु वैगृ २, १ : १; अप ४४, १, ५; शंध २८; -रैः वैगृ १, १ : १५; शंध ११; गौध ८, ८; मीसू ९, ३, २८××; -रौ बौपि ३,१,४; वैगृ ७, १ : २.

संस्कार-कर्तृ- -र्ता विध ९१, १९.

संस्कार-कर्मन्- -र्म मीसू १२, ४, २८; -र्मणि वाध २०, १८; विध ५१,५.

संस्कार-त्व- -त्वम् मीसू १०, २, ७१; -त्वात् आश्रौ ५, ६, २५; मीसू १,२,४५.

संस्कार-दीक्षा- -क्षाः आज्यो ८,६.

संस्कार-प्रतिषेध- -धः मीसू ९, ४, ३१; ११, २, ५०; -धात् आपश्रौ १, १०, २१; भाश्रौ १, १०,१५.

संस्कार-योग- -गात् मीसू १०, २,६५.

संस्कार-विधि- -धिम् बौपि ३, ११,१.

संस्कार-विशिष्ट- -ष्टम् गौध ५, ३४.

संस्कार-विशेष- -षात् वैगृ १, १ : १७; वाध ४,१.

संस्कार-शब्द- -ब्दः मीसू १०, ४,५६; -ब्दात् काश्रौ २६,४,९.

संस्कारशब्द-त्व- -त्वात् मीसू १०,४,५२.

---

*a*) = सं-सृप्- । *b*) °पां ह° इति शोधः (तु. सप्र. माश ५, ४,५, ३; कर्कः PW. BW. च) । *c*) सप्र. °पेष्टि° <> °पामिष्टि° इति पाभे. । *d*) °विः इति पाठः? यनि. शोधः (तु. आपश्रौ २२,२५,१३) । *e*) समसेवन्त इति राज. । *f*) व्यप. । *g*) त्रुटितः पाठः? संस्करोति इति संभाव्यते । *h*) संकर-कारक- इति शोधः (तु. बालक्रीडा [यास्मृ ३,२५४] पाभे.च) । *i*) तैप्रा ५,६पा ६,१,१३७;१३८ परामृष्टः द्र. । *j*) भाप.,नाप. । *k*) पाभे. पृ १२७८ i द्र. ।

